तत्तुच्छम्। परमाणोरतीन्द्रियत्वेन तत्पुञ्जीभूतघटादेरपि अप्रत्यक्षत्वप्रसङ्गात्। शतमप्यन्धा न पश्यन्तीति न्यायात् । न ह्येकमेव योग्यमयोग्यं च संभवति। न च केशप्रतिबन्दी, तस्यैव केशस्य सजातीयासंबन्धे साक्षात्कारस्वीकारात । परमाणोश्च तथात्वेऽपि प्रत्यक्षासंभवात्। न हि षण्ढः स्रक्चन्दनमलयानिलादौ सत्यपि कुङ्कुमारुणां तरुणीमुपभोक्तुं क्षमते । कुमारस्तु यौवने सति तस्मिन् सति क्षमत एव। किं च सजातीयसम्मेळनस्य न कारणत्वं द्व्यणुकप्रत्यक्षत्वप्रसङ्गात् । किं तु भूयस्सजातीयसंयोगस्य हेतुत्वं वाच्यम् । तथा च तदपेक्षया लाघवात् महत्त्वस्यैव तथात्वौचित्यात् । जगतः क्षणभङ्गुरत्वं प्रत्यभिज्ञाविरोधेनैव निरस्तम् । न चास्मन्मत इव त्वन्मतेऽपि सैवेयं दीपकलिकेतिवत् प्रत्यभिज्ञायास्तज्जातीयत्वावगाहित्वसंभवः । तव जातेरळीकत्वात् ॥

एतेन अन्त्यावयविभिन्नतन्त्वाद्यवयविसत्त्वेऽपि तन्त्वादिभिन्नपटाद्यवयविनिर्माणाभाव इति वेदान्तिनामर्धजरतीयमतमपास्तम् ॥

परमाणुद्व्यणुकयोर्मानाभावेन त्रुटेरेव निरवयवत्वेन नित्यत्वात् प्रत्यक्षत्वाच्च त्रुटिपुञ्ज एव घटादीति नोक्तबाधकलेशावकाश इति नवीनवेदान्तिनः । तदपि चिन्त्यम् । क्रियासमभि(व्या)हारेण परमाणुद्व्यणुकयोर्मानस्य निवेदितत्वात् । किं च घटादौ सूक्ष्मावयवावच्छेदेन चक्षुस्संयोगेन तत्प्रत्यक्षाभावेन भूयस्त्वावच्छेदेन तस्य तथात्वं कल्प्यम् त्रुटिभिन्नचाक्षुषे, अन्यथा तव त्रुटावेव व्यभिचारात् । तथा च लाघवाद्द्रव्यचाक्षुष एव भूयोऽवयवावच्छेदेन चक्षुषस्संयोगस्य कारणत्वकल्पनौचित्यात् । अपि च त्रुटेरस्पार्शनत्वेन घटादेरपि अस्पार्शनत्वप्रसङ्गात् त्रुटिपुञ्जभिन्नघटाद्यवयविसिद्धिरिति सर्वमवदातम् ॥

षोढा रूपरसौ पृथक्त्वगुरुता सङ्ख्यास्तथा नैकधा
संस्काराः परतापरत्वसुरभिस्पर्शा द्विधा च द्विधा ।
संयोगश्च विभाग एष परिमाणं वा चतुर्धैकधा
षट् चाष्टौ च गुणा द्रवत्वमनिशं भासन्त इत्थं क्षितौ ॥

## अथ जलनिरूपणम्

जलं च रसनेन्द्रियशरीरसरित्समुद्रहिमकरकादिप्रभेदेन बहुविधम् । तच्च गन्धवर्जस्नेहयुक्तपूर्वोक्तचतुर्दशगुणवत् । रसनेन्द्रियस्य अतीन्द्रियत्वं च घ्राणवत् । तच्च आप्यं, [1]रूपादिषु पञ्चसु रसस्यैवाभिव्यञ्जकत्वात् लालावत्, इत्यनुमानेन तस्य आप्यत्वं सिद्धम् । तच्च रसनाग्रवर्ती, शरीरं च वरुणलोके प्रसिद्धम् । सरित्समुद्रौ तु प्रसिद्धौ । हिमकरकयोस्तु शीतस्पर्शत्वादाप्यत्वम् । न च चन्दनचन्द्रप्रभाप्रभञ्जनादौ व्यभिचारः । तत्र शैत्यस्य औपाधिकत्वात्[2] । न च घर्षकजलापेक्षया चन्दने अधिकशैत्योपलम्भात् नैवमिति वाच्यम् । वायुवत् चन्दनस्यापि तच्छैत्याभिव्यञ्जकत्वात् ॥

रूपं च तत्र शुक्लमभास्वरम् । तरतमादिशून्यं एकजातीयमेवापाकजम् । न चाकूपारकालिन्दीजलादावपि कालिमोपलब्धेर्नैवमिति वाच्यम् । भूभाग-संबन्धौपाधिकत्वात । अत एव वियति विक्षिप्तानां कालिन्दीजलानां धवलिमोपलम्भः । न च तत्रापि तेजस्सम्बन्धौपाधिकत्वमिति वाच्यम् । नीलस्याप्युपलम्भप्रसङ्गात् । नीलोपलम्भजनकत्वेन तस्य तदभिभावकत्वा-संभवात् ॥

रसोऽपि तरतमादिशून्यः एकजातीयमधुर एव । लवणाद्युपलम्भस्तु औपाधिकः । ननु तत्र मधुररसत्वे मानाभावः द्राक्षेक्षुक्षीरादाविव तत्र माधुर्यानुपलम्भात् । ननु अनुद्भूत एव तत्र रस इति चेत्, न, तेजःप्रभृतिष्वपि तत्प्रसङ्गात् । तिक्तादिवेदनविलक्षणवेदनमेव माधुर्ये मानमिति चेन्न । माधुर्यादि-वेदनविलक्षणवेदनमेव तिक्तादिरसवत्त्वे मानमिति तिक्तादीनामप्यत्रसिद्धिप्रसङ्गात् । न चैक्षवरसादौ माधुर्योपलम्भात् तत्रापि तथात्वं कल्प्यत इति वाच्यम् । निम्बजम्बीरशृङ्गिबेराकूपारादिजलादौ तिक्तादीनामप्युपलम्भात् षड्रसस्यापि तत्र

1 मनसि व्यभिचारवारणाय एवकारः । रसत्वादिव्यञ्जकत्वेन असिद्धिवारणाय रूपादिष्विति । गगनादिवारणाय विशेष्यम । अत्रापि हेतुत्रये तात्पर्यम् ।

2 जलगतशैत्यस्य स्वाश्रयसंयुक्तत्वसम्बन्धेन चन्दनादौ भानमित्यर्थः । यद्वा भ्रम एव चन्दनादौ तादृशी प्रतीतिः । तत्र कारणं उक्तसम्बन्धेन शैत्यम् ।

सिद्धिप्रसङ्गात् । न च तिक्ताद्युपलम्भा निम्बाद्यौपाधिका इति वाच्यम् । माधुर्योपलम्भस्यापि इक्ष्वाद्यौपाधिकत्वात् । न च हरीतकीभक्षणानन्तरमुपलभ्यमानपानीयरसस्य मधुरत्वेन सर्वानुभवसिद्धत्वात् तथेति वाच्यम् । कर्कटीभक्षणानन्तरमुपलभ्यमानपानीयरसस्य तिक्तत्वेन सर्वानुभवसिद्धत्वेन तस्यापि तत्र सिद्धिप्रसङ्गात् । यदि च कर्कट्यवयवनिष्ठतिक्तरस एव तेनाभिव्यज्यते । कर्कटीभक्षणजनितरसनागतपित्तद्रव्यनिष्ठतिक्तरस एव वा तेनाभिव्यज्यत इति, तदा हरीतक्याद्यवयवसमवेतमधुर[रस एव], तज्जनितरसनासम्बन्धिमधुरद्रव्यगतरस एवाभिव्यज्यत इत्यपि वक्तुं शक्यत्वात् षड्रसवत्त्वं नीरसत्वं वा जले इति चेत्;

अत्र वदन्ति । कुन्तळसीमन्तिनीकान्तास्तनतटसङ्क्रान्तकुङ्कुमपङ्कविचित्रगात्राः निरन्तररतिसमरसंरम्भपरिश्रान्ताः अतिस्निग्धसुधाधवळितविधुमण्डितसौधाङ्गणकुट्टिमाधिष्ठितनिर्मलस्फटिकचषकविधृतधाराधरधारासु निरुपाधिकमाधुर्यमनुभवन्ति रसिकजना इति । इत्थं चात्र माधुर्यस्य निरुपाधिकत्वात् रसान्तरस्यापि कल्पनागौरवात् सर्वत्र मधुररस इति । स्पर्शस्तु शीतः । तरतमादिभेदेन बहुविधः ॥

यत्तु वाते वाति सति यादृश एव शीतस्तूपलभ्यते न तादृश एव सर्वत्र जले; परं तु वायुसंयोगोऽभिव्यञ्जकः । यत्र तु न तादृशसंयोगः तत्र न तत्प्रत्यक्षमिति तच्चिन्त्यम् । तादृशवाताभावे शीतप्रत्यक्षाभावप्रसङ्गात् । तद्व्यञ्जकाभावात् तत्र शीतान्तराभावाच्च । स्पर्शस्तु सङ्ख्यादयस्तु पूर्ववद्बोध्याः । संयोगोऽपि तत्र न कठिनः, अपि तु सुकुमार एव । द्रवत्वं सांसिद्धिकम् । रूपादिचतुष्टयम् ॥

द्रवत्वं च नित्यगतं नित्यमनित्यगतमनित्यमिति ।
सङ्ख्यादयः पूर्ववच्च जले भान्ति चतुर्दश ॥
अनित्यनित्यभेदेन द्वेधा रूपादिपञ्चकम् ।

इति जलनिरूपणम्

---

## अथ तेजोनिरूपणम्

तेजः चक्षुरिन्द्रियशरीरसुवर्णसवितृवह्निविद्युदादिभेदेन बहुविधम् । चक्षुरिन्द्रियस्यातीन्द्रियत्वं पूर्ववत् । तच्च तैजसं [1]रूपादिषु पञ्चसु मध्ये रूपस्यैवाभिव्यञ्जकत्वात् आलोकवत्, इत्यनुमानेन तस्य तैजसत्वसिद्धिः । तच्च कृष्णताराग्रवर्ति ॥

ननु गोळकातिरिक्तचक्षुरिन्द्रियसद्भावे मानाभावः । इन्द्रियस्य संबद्धार्थग्राहकत्वमसिद्धमप्रयोजकं च । अत एव शाखाचन्द्रमसोरपि समसमयग्रहणमुपपद्यते । अन्यथा शाखासंयोगानन्तरं प्रहरावधि विळम्बेन क्रियाविभागादिक्रमेण संयोगस्य सम्भावितत्वेन सर्वानुभवसिद्धसमसमयग्रहणमनुपपन्नमेव स्यात् । न च कुड्यादिव्यवहितघटादिप्रत्यक्षतापत्तिरिति वाच्यम् । आवरणाभावस्यापि तत्र कारणत्वात् । तस्य तवापि चक्षुर्गतिकारणत्वस्य क्लृप्तत्वादिति चेत् ॥

उच्यते । प्रसवान्धस्यापि घटादिचाक्षुषापातात् तस्यापि गोळकस्य सत्त्वात् । न चादृष्टविशेषाभावादेव तस्य चाक्षुषाभावोपपत्तिरिति वाच्यम् । इन्द्रियान्तराणामपि विलयप्रसङ्गात्; दृष्टेनैवोपपत्तौ अदृष्टकल्पनोच्छेदप्रसङ्गाच्च । शाखाग्राहकचक्षुरपेक्षया चन्द्रग्राहकचक्षुषोऽतिवेगवत्त्वेन समसमयग्रहणोपपत्तेः । अत एव कदाचित् क्रमिकग्रहणमुपपद्यते । तदानीं तस्य वेगवत्त्वाभावात् । किं च आवरणाभावस्य घटपटादिसाधारणगतिसामान्यं प्रत्येव कारणत्वात् । चक्षुर्गतिं प्रत्यपि पार्थक्येन तस्य कारणत्वाकल्पनात् । तस्य चाक्षुषं प्रत्यपि कारणत्वकल्पने तवैव गौरवात् ॥

शरीरं च स्वर्गादौ प्रसिद्धम् । तच्च तेजो रूपस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारैकादशगुणवत् । रूपं च शुक्लं भास्वरं एकजातीयमेव । भास्वरत्वं च स्वपरप्रकाशकत्वम् । स्पर्शोऽप्युष्णः । एक-

1 मनसि व्यभिचारवारणाय एवकारः । असिद्धिवारणाय मद्ध्यान्तम् । अत्रापि हेतुत्रये तात्पर्यम् ।

जातीय एव । तदुभयं नित्यगतं नित्यम्, अनित्यगतमनित्यम् । द्रवत्वं च नैमित्तिकम् । अवशिष्टं पूर्ववत् । सुवर्णं च प्रसिद्धम् ॥

ननु न सुवर्णं तैजसम्, अपि तु पार्थिवं प्रथिमाधिकरणत्वात्, गुरुत्वाधिकरणत्वात्, अनुष्णाशीतस्पर्शवत्त्वात् कठिनसंयोगवत्त्वाच्च । न च तदतिरिक्तस्तदुपष्टम्भकः कश्चन तेजोभागः सुवर्णपदवाच्योऽस्तीति वाच्यम्। अनुपलम्भात् कल्पनायां च मानाभावात् इति चेत् ॥

अत्र वदन्ति ।

पीतिमा च गुरुत्वं च दाहे यत्र च रक्तिमा ।
तस्य लोकप्रसिद्धस्य स्वर्णत्वं केन वार्यते ॥

इत्यागमप्रत्यक्षसिद्धः सुवर्णपदवाच्यः कश्चन पार्थिवो भागः । अपरश्च "अग्नेरपत्यं प्रथमं हिरण्यम्" "तेजो हिरण्यम्" इत्यादिश्रुतिसिद्धः कश्चन तेजोभागः सुवर्णपदवाच्यः । अनुमानं च [1]पीतिमाधिकरणं सुवर्णं द्रवद्रव्योपष्टब्धम् [2]अत्यन्ताग्निसंयोगे सत्यपि अनुच्छिद्यमानद्रवत्वाधिकरणत्वात् क्वथ्यमानजलमध्यस्थितघृतवत् । तच्चोपष्टम्भकद्रव्यं न पार्थिवम् अनवस्थानात् । नाप्याप्यं नैमित्तिकद्रवत्वाधिकरणत्वात् । पारिशेष्यात्तस्य तैजसत्वसिद्धिः ॥

सुवर्णं न पार्थिवं न वा तैजसम्, न वा द्रव्यद्वयम्, अपि तु अतिरिक्तद्रव्यमिति केचित् । अन्ये च सौरादयः प्रसिद्धाः ॥

वह्निश्चतुर्विधः । भौमदिव्यौदर्याकरजभेदात् । तत्र भौमः प्रसिद्धः । दिव्योऽशनिपातजः । औदर्यो जाठरानलः । आकरजो बडबानलः । सोऽप्यबिन्धनः ॥

तदपि तेजः पञ्चविधम् । उद्भूतरूपस्पर्शमनुद्भूतरूपस्पर्शम् उद्भूताभिभूतरूपस्पर्शम् उद्भूतरूपमनुद्भूतस्पर्शम् अनुद्भूतरूपमुद्भूतस्पर्शं चेति । तत्र

1 तेजोभागेऽपि सुवर्णपदवाच्यत्वसत्त्वादुक्तं—पीतिमेति ।

2 अग्निसंयोगासहकृतघृते व्यभिचारवारणाय विशेषणम् । यथाकथंचिदग्निसंयुक्त तत्रैव वारणाय—अतीति । केवलघृते व्यभिचारवारणाय विशेष्यम् ।

आद्यं वह्न्यादिकं । द्वितीयं चक्षुरादिकम् । तृतीयं सुवर्णम् । चतुर्थं प्रदीपप्रभादिकम् । पञ्चमं भर्जनकपालस्थवह्न्यादिकम् । प्रभातेजसोरूपमिति टीकाकृतः । तन्मते तु चतुर्विधं बोध्यम् ॥

तेजः पञ्चविधं प्रोक्तं गुणा ह्येकादश स्मृताः ।
भासन्ते तत्र नूनं ते नित्यं रूपादयो बुधैः ॥

अथ वायुनिरूपणम्

वायुस्त्वगिन्द्रियशरीरप्राणवातवात्यादिभेदेन नानाविधः ॥

ननु वायोरतिरिक्तद्रव्यत्वे मानाभावः । भूविशेषेणैव तद्व्यवहारोपपत्तेः । न च उद्भूतस्पर्शवत्पृथिव्या उद्भूतरूपवत्वनियमात् न तस्य पृथिवीत्वमिति वाच्यम् । अप्रयोजकत्वात । अन्यथा उद्भूतरूपवत्पृथिव्याः उद्भूतस्पर्शत्वनियमात् नयनगतपित्तद्रव्यबाष्पादेरतिरिक्तद्रव्यत्वप्रङ्गात् । अन्यथा तव तमसोऽपि पृथिवीत्वप्रसङ्गात् । न च तिर्यग्गमनस्वभावत्वान्नैवमिति वाच्यम् । वाय्वादौ तदभावात् कदाचित् तिर्यग्गमनस्य काण्डा[का]दावपि सत्त्वात । न च गुरुत्वाभान्नैवमिति वाच्यम् । गुरुत्वस्य पृथिवीत्वव्यापकत्वे मानाभावात । भावे वा धूमबाष्पादाविव तत्रापि गुरुत्वस्वीकारे बाधकाभावात् । तद्वदेव तत्कार्यपतनाभावस्याप्युपपत्तेः । न च गन्धाभावान्नैवमिति वाच्यम् । सुरभिः समीरण इति प्रतीत्या गन्धस्यापि तत्र सत्त्वात । रसवत्त्वं पाषाणादिवदुपपन्नम् । कठिनसंयोगाभावोऽपि धूमवदुपपन्नः । एवं द्रवत्वाभावोऽपि द्रष्टव्य इति चेत् ॥

उच्यते । त्वगिन्द्रियं न पार्थिवं गन्धानभिव्यञ्जकत्वात् । चक्षुर्वत् । रूपरसशब्दानभिव्यञ्जकत्वेन तेजःप्रभृतिभिन्नत्वे सिद्धे परिशेषात्तस्यातिरिक्तद्रव्यत्वे सिद्धे तस्य स्पर्शग्राहकस्य सर्वानुभवसिद्धत्वात् वातादिकमपि न पृथिव्यादिकम् । किं तु त्वगिन्द्रियजातीयं स्पर्शाभिव्यञ्जकत्वात् त्वगिन्द्रियवत् इत्यनुमानेन इतरेषामपि तथात्वसिद्धिः । स च वायुरतीन्द्रियः । उद्भूतरूपाभावात् । कालादिवत् ॥

अत्र मीमांसकाः—वायुस्तु त्वगिन्द्रियप्रत्यक्षः [प्रत्यक्ष]स्पर्शाश्रयत्वात्[1] घटवत् । अन्यथा घटादिरपि स्पार्शनो न स्यात् । तत्रापि स्पर्श एव स्पार्शनः [न] घटादिरित्यपि तुल्यत्वात् । द्रव्यस्पार्शने उद्भूतस्पर्शस्य कारणत्वेन सामग्र्या अप्युभयत्र समानत्वात् । बहिर्द्रव्यप्रत्यक्षे उद्भूत-रूपस्य कारणत्वे मानाभावात् । अन्यथा उद्भूतस्पर्श एव तत्र कारणमिति किं न स्यात्? विनिगमनाविरहात् । न च प्रभाबाष्पनयनगतपित्तद्रव्यादौ स्पर्शव्यभिचार इति वाच्यम् । भर्जनकपालस्थवह्निचन्द्रप्रभाप्रभञ्जनानीत-शीतोष्णभागादौ रूपस्यापि व्यभिचारात् । पक्षसमत्वं च उभयत्रापि साम्यम् । न च प्रभादीनां प्रत्यक्षत्वं सर्वानुभवसिद्धमिति वाच्यम् । तत्रापि रूपमेव प्रत्यक्षम्, न तु द्रव्यमपि, तुल्ययोगक्षेमत्वात् । एतेन विनिगमनाविरहात् उभयोरपि नियामकत्वेऽपि वायुर्न प्रत्यक्ष इति शशधर-मतमपास्तम् । उभयोरपि (द्रय)व्यभिचारस्य निवेदितत्वात् । तस्माद् द्रव्य-चाक्षुषे उद्भूतरूपं द्रव्यस्पार्शने उद्भूतस्पर्शः कारणमित्येव कार्यकारणभावः । न तु बहिर्द्रव्यप्रत्यक्षे किञ्चित्कारणं मानाभावात् । अत एवोक्तानुमाने उद्भूतरूपमुपाधिरिति निरस्तम्, साध्याव्यापकत्वादिति प्राहुः । एतदेव दीधितिकृतामपि मतम् । अधिकं चास्मत्कृतलीलावतीरहस्ये अनुसन्धेयम् ॥

गन्धोपलम्भश्च तत्र औपाधिकः । चम्पकगन्धः कर्पूरगन्धः समीरण इत्याद्युपाधिसंभेदेनैव तत्र तत्प्रत्ययात् ॥

ननु चम्पककर्पूरादीनां दूरस्थत्वेऽपि गन्धानुभवस्य सर्वानुभवसिद्धत्वात् इन्द्रियाणां च संबद्धार्थग्राहकत्वात् वायावेव तज्जातीयगन्धः स्वीक्रियते । न च वायुना चम्पककर्पूरभागा आनीयन्त इति वाच्यम् । चम्पकादीनां सच्छिद्रत्वप्रसङ्गात् । कर्पूरादीनां माषादेस्त्रुटिप्रसङ्गात् । न च वायुना अपरभागा आनीय पुनः पूर्यन्त इति वाच्यम् । अस्माभिस्तथाकृतेऽपि सच्छिद्रता न्यूनता च न स्यादिति चेत् ॥

1 त्वगिन्द्रियादौ व्यभिचारवारणाय प्रत्यक्षेति । प्रत्यक्षद्रव्यत्वाश्रये कालादौ तद्वारणाय स्पर्शेति ।

अत्राहुः । किमिदं सच्छिद्रत्वम् । अन्तर्निहितद्रव्यपतनप्रतिबन्धकसंयोगशून्यत्वं वा, अन्तर्निहितद्रवद्रव्यपतनप्रतिबन्धकसंयोगशून्यत्वं वा, प्रशिथिलावयवसंयोगशून्यत्वं वा, मध्यमसंयोगशून्यावयवकत्वं वा, पूर्वापेक्षया न्यूनावयवत्वं वा? नाद्यौ, प्रान्तभागानयनेऽपि सच्छिद्रत्वापादनं न स्यात् । न तृतीयतुरीयौ, असिद्धेः । नान्त्यः, अवयवावयवानयनेऽपि सच्छिद्रत्वापादनं न स्यात् । तस्मात् वायुना चम्पकादिभागा एवानीयन्त इत्यभ्युपेयते । वस्तुतस्तु, तत्परागानयने तु न कोऽपि दोषः । मवलेद् [illegible]सयति कर्पूरादौ का गतिरिति चेदित्थम्—यथा परापरभागपूरणेनाध्यात्मिकवायुः न्यग्रोधाङ्कुरकरीरादिकमिन्द्रेन्दुमुखवृन्दारकवृन्दमन्दिरचुम्बिनं विशालविविधविटपपरिवीतं महान्तं पादपं विदधाति । न तु मादृशैश्छिन्ने, तथैव स्वेन घनसारानयने परापरभागान् अन्यूनातिरिक्तान् पूरयति । न तु मादृशैर्निहितायां हिमवालुकायामिति गतिं गृहाणेति सर्वं रमणीयम् ॥

ननु चर्मातिरिक्तत्वगिन्द्रियसद्भावे मानाभावः । एवं च पार्थिवमेव त्वगिन्द्रियमिति चेन्न । त्वगिन्द्रियं न पार्थिवम्, अपि तु वायवीयम्, गन्धानभिव्यञ्जकत्वे सति स्पर्शाभिव्यञ्जकत्वात्[1] । अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनवदिति मानस्य जागरूकत्वात् । किं च, कुष्ठविशेषवतः सर्पदष्टस्य किणाङ्कस्य जन्तोस्तदवच्छेदेन घटादिसंयोगे सति स्पार्शनप्रत्यक्षप्रसङ्गात्, चर्मणस्सत्त्वात् । शरीरं च प्रसिद्धं पैशाचम् । अन्ये च प्रसिद्धाः । स च स्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वसंस्कारनवगुणवान् । स्पर्शस्तु अनुष्णाशीतोऽपाकजश्च । 'शीतो वायुः' 'उष्णो वायुः' इत्याद्युपलम्भस्त्वौपाधिकः । शेषं पूर्ववदिति सङ्क्षेपः ॥

स्पर्शादयो नव गुणा भान्ति वायौ पुरैव हि ।
तदन्यत्वे[2] प्रमाणं तु तस्य विज्ञापितं बुधैः ॥

---

1 मनोवारणाय विशेषणम् । गगनवारणाय विशेष्यम् ।

2 A reads—तथान्यत्वे ।

आकाशं विभु एकं नित्यम् । तच्च संख्यापरिमाणपृथक्त्वसंयोगविभागशब्दाख्यषड्गुणवत् । शब्दश्च तत्र तारमन्द्रतरतमादिभेदेन नानाविधः । स च सर्वोऽप्यनित्यः । नित्य इति मीमांसकाः । भाट्टवेदान्तिनौ तु द्रव्यमिति वदतः ॥

ननु ईश्वरातिरिक्ताकाशसद्भावे मानाभावः । शब्दाश्रयत्वमपीश्वरस्य कल्प्यते । द्रव्यान्तरकल्पने गौरवात् । न च जीवानादाय विनिगमनाविरह इति वाच्यम् । जीवस्य तदाश्रयत्वे कल्प्यमाने कारणत्वं समवायित्वं द्वयं कल्पनीयम् । तथा च कारणत्वेन क्लृप्तस्यैवेश्वरस्य समवायित्वमात्रकल्पनौचित्यात् । [1]केषाञ्चिन्मते जीवस्य परिच्छिन्नत्वेन सर्वत्र शब्दानुत्पादप्रसङ्गात् । शब्दस्य मनोवेद्यत्वप्रसङ्गाच्च । आकाशपदवाच्योऽपि ईश्वर एव । वेदान्तिभिरपि '[2]आकाशस्तल्लिङ्गात' इत्यधिकरणे आकाशशब्दस्य ईश्वरवाचकत्वं व्यवस्थापितम् । महेश्वरेऽष्टौ गुणा इति सिद्धान्तस्य च निर्युक्तिकत्वेन अश्रद्धेयत्वात् । श्रोत्रेन्द्रियमपि कर्णशष्कुल्यवच्छिन्नेश्वर एव । न चेन्द्रियस्यासाधारणकारणत्वात् ईश्वरस्य साधारणकारणत्वात् तयोश्च विरुद्धत्वान्नाकाशमीश्वर इति वाच्यम् । तयोर्विरुद्धत्वे मानाभावात् । अन्यथा कालदिगादेः स्वसमवेतसंयोगविभागद्वित्वादावसाधारण[कारण]त्वं न स्यात् । अदृष्टादेः स्वर्गादिकं प्रति असाधारणत्वं न स्यात् । तयोः साधारणकारणत्वादिति चेत् ॥

नैवम् । 'आकाशस्तल्लिङ्गात्' इत्यधिकरणविरोधात् । अत्र ह्याकाशशब्दो भूताकाशपरः आत्मपरो वेति सन्देहे, प्रसिद्धत्वात् भूताकाशपर इति

1 माध्वादीनां मते जैनमते च ।

2 "आकाश इति होवाच सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते" इत्यत्र आकाशशब्दः परमात्मपर इति प्रथमप्रथमाध्याये निर्णीतम् ।

पूर्वपक्षे च जगत्कारणत्वसत्यकामादिलिङ्गात्[1] न भूताकाशपरः। किं त्वात्मपर इति सिद्धान्तितम्। एवं चात्मभिन्नाकाशानङ्गीकारे संशयपूर्वपक्षयोरभावेन तदधिकरणभङ्गप्रसङ्गो दुर्वारः, अधिकरणलक्षणाभावात्॥

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः।
प्रयोजनं च पञ्चैते प्राञ्चोऽधिकरणं विदुः॥

इत्येव हि अधिकरणलक्षणम्। तच्चाकाशं नित्यम्, निरवयवद्रव्यत्वात्, आत्मवत्। घटादौ व्यभिचारवारणाय निरवयवेति। घटरूपादौ तन्निरासाय द्रव्यत्वेति। अनेनानुमानेन तस्य नित्यत्वम्। अन्यथा उत्पत्तिविनाशकल्पने गौरवात्॥

वेदान्तिनस्तु "आत्मन आकाशः सम्भूतः" इत्यादिश्रुतिबलादनित्यमेव तदाकाशमिति स्वीकुर्वन्ति। [2]केचित्तु आवरणाभाव एव आकाशः, न तु द्रव्यमित्याहुः॥

तदप्येकम्, भेदे प्रमाणाभावात्, गौरवाच्च। विभु च तत्, सर्वत्र कार्योपलम्भात्। तदेव श्रोत्रेन्द्रियम्।

ननु श्रोत्रेन्द्रियं नाकाशः, अपि तु द्रव्यान्तरम्। तत् चक्षुरादिवत् प्रतिपुरुषं भिन्नम्। तच्चानित्यम्। अन्यथा बाधिर्यानुपपत्तेः। अत एव न कर्णः श्रोत्रेन्द्रियम्। न चादृष्टविशेषाभावादेव बाधिर्योपपत्तिरिति वाच्यम्। तत्तदधिष्ठानातिरिक्तेन्द्रियाणां सर्वेषामेव विलयप्रसङ्गात्। न च रूपादिपञ्चसु मध्ये यदिन्द्रियं यद्गुणग्राहकं तदिन्द्रियं तद्गुणवत्। यथा चक्षुः रूपवदित्यनुमानेन तेषां शब्दाश्रयत्वे सिद्धे आकाशस्यापि तदाश्रयत्वे

1 इदं चिन्त्यम्। आकाशवाक्ये सत्यकामत्वाश्रवणात्। यद्वा दहराकाशप्रकरणे सत्यकामत्वश्रवणात् तदभिप्रायेणेदम्।

2 बौद्धाः।

मानाभावेन भेर्यादिदेशे शब्दोत्पत्तिर्न स्यादिति वाच्यम् । अप्रयोजकत्वात् । अन्यथा यदिन्द्रियं यद्गुणग्राहकं तदिन्द्रियं तद्गुणवदिति सामान्यव्याप्त्या मनसोऽपि ज्ञानादिमत्वप्रसङ्गात् । तथा आकाशसमवेत एव शब्दः संयुक्तसमवायसन्निकर्षेणैव श्रोत्रेन्द्रियेण गृह्यते । चक्षुरादिना रूपादिवत् । न चातिरिक्तानन्तकोटिद्रव्यकल्पने गौरवमिति वाच्यम् । इन्द्रियान्तराणामपि विलयप्रसङ्गात् इति चेत् ॥

मैवं । क्लृप्तेनैवोपपत्तौ अक्लृप्तकल्पनाया अन्याय्यत्वात् । अन्यथा इन्द्रियान्तराणामपि अतिरिक्तद्रव्यत्वप्रसङ्गात् । न च सर्वेषां सर्वशब्दोपलब्धिप्रसङ्गः । तस्य गगनस्य एकत्वादिति वाच्यम् । कर्णशुष्कुल्यवच्छिन्ननभस एव श्रोत्रत्वात् । न च विशिष्टस्य अनतिरिक्तत्वात् स दोषस्तदवस्थ इति वाच्यम् । शब्दस्याव्याप्यवृत्तित्वेन देशान्तरोत्पन्नस्य कर्णशष्कुल्यवच्छेदेन नभस्यभावात् । शाखावच्छिन्नवृक्षवृत्तिकपिसंयोगस्य मूलावच्छेदेन वृक्षे अभाववत् । न च भेर्यादिदेशे उत्पन्नस्य शब्दस्य श्रोत्रदेशे अभावात् कथं तच्छब्दग्रह इति वाच्यम्, वीचीतरङ्गन्यायेन श्रोत्रदेशपर्यन्तमेव शब्दजशब्दधारास्वीकारात् । 'भेरीशब्दो मयाश्रुत' इति धीः भ्रान्तैव, 'सैवेयमिन्दीवरकलिका' इति[1] प्रत्यभिज्ञानवत् तज्जातीयत्वावगाहिनी वा । शेषं शब्दनिरूपणे वक्ष्यामः ॥

ननु भेर्यादिकमेव शब्दसमवायि । अत एव घनशब्दो घण्टाशब्दः शङ्खशब्दो वीणाशब्द इति प्रत्ययाः । इत्थं च चक्षुरादिरिव वेगवच्छ्रोत्रम् अधिष्ठानभेर्यादिसंबद्धं सदेव शब्दग्राहकम्; अतिरिक्तद्रव्यमेव श्रोत्रेन्द्रियम् । अत एव 'भेरीशब्दो मया श्रुतः' इति प्रत्ययोऽपि समीचीनः । अत एव शब्दजशब्दधाराक्लेशोऽपि नास्ति । एतेनानन्तेन्द्रियकल्पनागौरवमपि निरवकाशम् । अनन्तकोटिशब्दजशब्दकल्पनापेक्षया प्राणिसमसङ्ख्याकश्रोत्रेन्द्रिययुगळकल्पनाया एव लघुत्वात् । न च भेर्यादीनामनन्तानां शब्दं प्रति समवायिकारणत्वकल्पनापेक्षया एकस्यैवाकाशस्य समवायिकारणत्वं लघ्विति

1 A reads—दीपावळेति ।

वाच्यम् । समवायिकारणत्वापेक्षया निमित्तकारणत्वस्य गुरुशरीरत्वेन तेषां निमित्तकारणत्वस्य गगनस्य समवायिकारणत्वस्य च कल्पनामपेक्ष्य तेषामेव समवायिकारणत्वकल्पनाया लघुत्वात् । किं च भेर्यादीनां कारणत्वस्य उभयसिद्धत्वात् तेषां अवच्छेदकत्वकल्पनायाः समवायित्वकल्पनायाः साम्येऽपि नभसः समवायित्वस्य कारणत्वस्य च कल्पने तवैव गौरवात् । अपि चानन्तानां कर्णशष्कुलीनामवच्छेदकत्वकल्पनायास्तेषामधिष्ठानत्वकल्पनायाः साम्येऽपि तेषां निमित्तकारणत्वस्यापि कल्पने भवत एव गौरवादिति चेत्;

उच्यते । अनन्तकोटीन्द्रियाणां तत्प्रागभावानां तद्ध्वंसानां तदुत्पत्तीनां तत्कार्यकारणभावानां तत्तदत्यन्ताभावानां तत्प्रतियोगिकानुयोगिकभेदानां तेषामनन्ताधिकरणवृत्तित्वानां च कल्पनामपेक्ष्य क्लृप्तस्यैकस्यैव नभसश्श्रोत्रेन्द्रियत्वकल्पनाया एव लाघवेन उचितत्वात् ॥

इत्थं च कारणत्वेन क्लृप्तस्य तस्यैवाकाशस्य समवायित्वकल्पनं युक्तम् । अन्यथा अनन्तानां भेर्यादीनां शब्दसमवायित्वकल्पने अतिगौरवात् । भेर्यादिशब्दप्रत्यक्षाभावप्रसङ्गाच्च । कर्णशष्कुल्यवच्छिन्ननभस एव श्रोत्रेन्द्रियत्वेन तदवच्छेदेन भेर्यादिशब्दाद्यभावेन सन्निकर्षाभावात् । कर्णशष्कुल्यवच्छिन्नोत्पन्नशब्दस्यैव सन्निकृष्टत्वात् । अन्यथा अतिप्रसङ्गादिति सर्वं सुन्दरम् ॥

स च शब्दस्त्रिविधः । संयोगजः विभागजः शब्दजश्चेति । भेरीदण्डसंयोगजः संयोगजः । एवं वंशपाटने पटपटादिशब्दो विभागजः । द्वितीयादिशब्दाः सर्वे शब्दजाः । तत्र कारणविभागस्त्वग्रे वक्ष्यते । परिमाणं च तत्र परममहत् । अपरिच्छिन्नपरिमाणवानित्यर्थः । तदपि नित्यमेव । शेषं पूर्ववत् ॥

शब्दादयो गुणाः षट् च राजन्ते वियति ध्रुवम् ।
श्रोत्रेन्द्रियं तदेवैवं शब्दाधारं तथैव च[1] ॥

दिक्कालनिरूपणम्

कालदिशावप्येके[2] । ते च नित्ये । विभ्व्यौ च । एके अपि ते तपनपरिस्पन्दाद्युपाधिसंभेदात् उदयास्तगिरितपनसंयोगाद्युपाधिसंभेदाच्च प्राच्यादिसंज्ञतां लभेते । पुरुष इव वचनपठनादिक्रियोपाधिवशात वाचकपाठकाद्युपाधिव्यपदेशवत् । ते सङ्ख्यादिपञ्चगुणवत्यौ ॥

अत्र दीधितिकृतः—दिकाल्योर्मानाभावः । वर्तमानादिप्राच्यादिव्यवहाराणां चावश्यमभ्युपेयैरुपाधिभिरेवोपपत्तेः । अथ परत्वापरत्वासमवायिकारणसंयोगाश्रयत्वेन तयोः सिद्धिः । तथा हि—अस्ति बहुतरतपनपरिस्पन्दे स्थविरे अल्पतरतपनपरिस्पन्दे यूनि बहुतरसंयुक्तसंयोगदवीयोदेशस्थे अल्पतरसंयुक्तसंयोगनेदीयोदेशस्थे च परत्वापरत्वव्यवहारः सर्वानुभवसिद्धः । तथा च तन्नियामकत्वेन सिद्धयोर्द्विविषयोः परत्वापरत्वयोः समवायिकारणं पिण्डः, असमवायिकारणं कालसंयोगः दिक्संयोगश्च । कालाद्युपाधेः तपनपरिस्पन्दरूपत्वेन पिण्डसंयोगाभावात् । समवायिकारणप्रत्यासन्नत्वाभावात्, वृद्धव्यवहाराभावाच्चेति चेन्न । ईश्वरसंयोगस्यैवासमवायिकाणत्वाभ्युपगमात् । दैशिकयोः परत्वापरत्वयोश्च तत्तद्देशपिण्डसंयोगस्यैवासमवायिकारणत्वसंभवेन तदतिरिक्तकालदिशोः शशशृङ्गायमाणत्वात् । श्रुतिस्मृतिपुराणादौ ईश्वर एव बहुशः कालशब्दप्रयोगाच्चेति प्राहुः ॥

सङ्ख्यादयो गुणाः पञ्च दिशि काले व्यवस्थिताः ।
शिरोमणिस्तयोर्मानं नास्तीत्याह विचक्षणः ॥

1 A reads तदेव च ।
2 A reads प्येवं नित्ये ।

## आत्मनिरूपणम्

आत्मा नित्यो विभुश्च । स च द्विविधः । जीवेश्वरभेदात् । [तत्र ईश्वरः एक एव] जीवास्त्वनन्ताः ॥

अत्र केचित्—शरीरातिरिक्तात्मसद्भावे मानाभावः । अत एव 'स्थूलोऽहं' 'गौरोऽहम्' इत्यादिप्रतीतिरपि संगच्छते । न चेयं भ्रान्तिः, बाधकाभावात् । अत एव ब्राह्मणो विद्वान्, राजा सुखी, युवा रागी, कुलालो घटकर्ता, इत्यादिव्यवहारा अपि सङ्गच्छन्ते । अन्यथा ब्राह्मण्यादेश्च शरीरधर्मत्वात् ज्ञानादेश्च शरीराधर्मत्वात्तद्वतोरभेदव्यवहारानुपपत्तेः । प्राणादिरूपसहकार्यभावेन इन्द्रियाणां नष्टत्वेन च मृतशरीरस्याज्ञातृत्वोपपत्तेः । भूताद्यावेशस्त्वसिद्ध एव । ज्वरादिरोगविशेषेणैव विकलत्वाद्युपपत्तेः । अत एव ईश्वरे परलोके च मानाभावः । सुखदुःखयोरेव स्वर्गनरकादिपदवाच्यत्वात् । पञ्चत्वस्यापवर्गपदार्थत्वात् । सुखदुःखादिवैचित्र्यस्य सेव्यसेवकभावस्य नरवानरसूकरकेसरिमयूरादिविचित्रयोनिसम्बन्धस्य च स्वभावादेवोपपत्तेः । तथैव संसारस्वभावात् । 'मम शरीर'मित्यादेरपि घटस्वरूपमित्यादिवदुपपत्तेरिति वदन्ति ॥

तत्तुच्छम् । प्राणशरीरेन्द्रियाणामचेतनत्वेन तदतिरिक्तचेतनं विना विद्वदादिव्यवहारानुपपत्तेः । न च प्रत्येकं तेषां अचेतनत्वेऽपि सहकारिलाभात शरीरस्य चैतन्यं नानुपपन्नं, अन्यथा तवाऽपि सुषुप्तौ ज्ञानोत्पत्तिप्रसङ्गादिति वाच्यम् । विनिगमनाविरहेण प्राणेन्द्रियशरीराणांचैतन्यकल्पनामपेक्ष्य एकस्यैव चेतनस्यात्मनः कल्पनाया लघुत्वात् । न च प्राणानामिन्द्रियाणां चानेकत्वाच्छरीरस्य चैतन्यकल्पने लाघवमेव विनिगमकमस्तीति वाच्यम् । एवमपि तत्तदिन्द्रियं तत्तत्प्राणादिकमादाय विनिगमनाविरहस्य वज्रलेपायमानत्वात् । नचातिरिक्तचेतनकल्पनेऽपि तैर्विनिगमनाविरह इति वाच्यम् । धर्मिग्राहकप्रमाणेन तस्य चेतनत्वेनैव सिद्धेः । किं च किमिदं स्वभावत्वं प्राणित्वं वा नरत्वं वा तत्तद्व्यक्तित्वं वा स्वजन्यत्वं

वा, नाद्यौ, अतिप्रसङ्गतादवस्थ्यात् । न तृतीयः, अननुगमात् । न तुरीयः, असिद्धेः । तस्माद्विचित्रसुखदुःखाश्रयः शरीराद्यतिरिक्तः चेतनस्सिद्धः । एवमपि कथं सुखदुःखादिवैचित्र्यमितिचेत् तस्य नित्यत्वेन जन्मान्तरकर्मविपाकादेवेति ॥

गौरोऽहमित्यादिप्रत्ययस्तु भ्रमः । अत एव विशेषदर्शना' न्ममशरीरमि ' त्यादिव्यवहारः । ब्राह्मणो विद्वानित्यादेश्च ब्राह्मणशरीरावच्छिन्नात्मा विद्वानित्यर्थत्वान्न विरोध इति ॥

अन्ये तु शरीरं न चेतनं कृत्रिमपुत्रिकादिविचित्रचित्रगात्रादौ तदभावात् । नापि प्राणाः । बहिर्गतप्राणादौ तदभावात् । नापि विशिष्टम् । फूत्कारादिपूरितकृत्रिमपुत्रिकादौ तदभावात् । किन्त्विन्द्रियं । अत एव " काणोऽहं " " मूकोऽहं " " बधिरोऽहं " इत्यादिव्यवहारास्संगच्छन्ते इत्याहुः ॥

तदपि न, इन्द्रियाणामप्यनेकत्वेन विनिगमनाविरहात् । किं च चक्षुर्न चेतनं, अन्धस्य चैतन्याभावप्रसङ्गात् । नापि श्रोत्रं, बधिरस्य तदभावप्रसङ्गात् । नाऽपि रसना, तस्याः रसतत्समवेतमात्रग्राहकत्वेनानुभवसिद्धत्वात्, तदतिरिक्तज्ञानाद्यभावप्रसङ्गात् । रसनेन्द्रियस्य रसनामात्रवृत्तित्वेन करकुचसंयोगे कामविकारो न स्यात् । तस्य सर्वशरीरव्यापकत्वे तत्राऽपि रसोपलब्धिप्रसङ्गात् । अत एव न घ्राणेन्द्रियम् । तस्यापि प्रतिनियतगुणग्राहकत्वात् । च्छिन्ननासस्य छिन्नरसनस्य च तदभावप्रसङ्गात् । नाऽपि त्वगिन्द्रियम् । कुष्ठ्यादेश्चैतन्याभावप्रसङ्गात् ॥

अन्ये तु प्राणाद्यन्वयव्यतिरेकानुविधानेनैव ज्ञानादेः [illegible] प्राण एव चेतनः । नचोक्तदोषप्रसङ्गः । शरीरेन्द्रियसहकारेणैव ज्ञानाद्युत्पत्तिस्स्वीकारात् । कृत्रिमपुत्रिकादौ चेन्द्रियाभावात् । अत एव प्राणसंयोगवियोगाभ्यां जीवत्वपञ्चत्वव्यवहारावपि संगच्छेते इत्याहुः ॥

तदपि न सुन्दरम् । प्राणादीनामप्यनन्तत्वेन तदयोगात् । सुषुप्तावपि प्राणशरीरेन्द्रियाणां तत्संबद्धानाञ्च सत्वेन तदानीमपि ज्ञानाद्युत्पत्तिप्रसङ्गाच्च । न च शरीरमनोयोगाभावात् त्वङ्मनोयोगाभावाच्च न तदा ज्ञानाद्युत्पत्तिरिति वाच्यम् । एवमपि पूर्वदोषानुद्धारात् ॥

इतरे तु मन एवात्मा, अनेन विना ज्ञानादीनामभावात् । तस्यापि नित्यत्वेन त्वदुक्तरीत्या सुखादिवैचित्र्याणामुपपत्तेरिति वदन्ति ॥

तदपि न रहस्यम् । धर्मिग्राहकप्रमाणेन मनसोऽणुत्वेनैव सिद्धत्वात् ' अहं सुखी 'त्यादिप्रत्यक्षाभावप्रसङ्गात् । अणुत्वञ्च तस्याग्रे साधयिष्यामः । एतेन जीवोऽणुरिति वैष्णवानां मतमपास्तम् ॥

परिच्छिन्नपरिमाणवान् जीवः प्रदीपप्रभावत् सङ्कोचविकासशालीति नवीनवैष्णवानां मतमप्यतितुच्छम् । जीवस्य दीपप्रभावत् संकोचविकासशालित्वे सावयवत्वेनाऽनित्यत्वप्रसङ्गात् । जन्यभावस्य विनाशित्वनियमात् । अन्यथा पटादेरपि नित्यत्वप्रसङ्गात् । मनस एव तथात्वस्वीकारेण वक्ष्यमाणसर्वानुपपत्त्युद्धारणसम्भवेन तेनैव सर्वसामञ्जस्ये जीवासिद्धिप्रसङ्गाच्च । तस्मात् पारिशेष्याच्छरीरेन्द्रियप्राणमनोभिन्नो विभुर्जीवः सिद्धः ॥

किं च काश्मीरनेपाळाद्युत्पन्नकुङ्कुमकस्तूरीचामरादीनां कर्णाटकचक्रवर्तिभोगहेतुत्वेन तेषां तददृष्टजननावश्यकत्वात् । जीवस्य वैभवाभावे च तददृष्टस्य कार्यदेशे अवर्तमानत्वेन व्यधिकरणत्वात् कारणत्वासंभवात् जीवस्य वैभवसिद्धिः । इत्थं च स्वाश्रयसंयोगसंबन्धेन कार्यदेशे तददृष्टस्य विद्यमानत्वात् समानाधिकरणत्वाच्च कारणत्वमप्यविरुद्धम् । नचैवं तेन सम्बन्धेन तदीयादृष्टस्य सर्वत्र सत्वात् सर्वस्याऽपि तद्भोगहेतुत्वप्रसङ्ग इति वाच्यम् । अरण्यस्थदण्डवत् कारणातिप्रसङ्गस्य अदोषत्वात् । न च सर्वेषामेव पदार्थानां सर्वोपभोगहेतुत्वप्रसङ्ग इतिवाच्यम् । विशेषसामग्रीविरहादेव नियमोपपत्तेः ॥

सुखादिवैचित्र्यादेव जीवः प्रतिशरीरं भिन्नः[1] नित्यश्च । स च सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नभावनादिचतुर्दशगुणवान् । तत्र सङ्ख्यादिपञ्चकं पूर्ववत् । बुध्यादयः सर्वे अनित्याः । बुध्यादयः षडव्याप्यवृत्तयः । तत्र घटाद्यवच्छेदेन ज्ञानेच्छाद्वेषाणामनुत्पत्त्या तेषामव्याप्यवृत्तित्वम् । सुखदुःखप्रयत्नानाञ्च पादे मे सुखं शिरसि मे वेदनेत्याद्यनुभवेन अव्याप्यवृत्तित्वम् ; चेष्टासामान्यं प्रत्यन्वयव्यतिरेकाभ्यां प्रयत्नसामान्यस्य कारणत्वावधारणात्, विलक्षणचेष्टां प्रति विलक्षणप्रयत्नस्य हेतुत्वमवधार्यते । यत्सामान्ये यत्सामान्यं प्रयोजकं तद्विशेषस्याऽपि तद्विशेषप्रयोजकत्वमिति [2]न्यायात् । शरीरेऽपि किञ्चिदवयवावच्छेदेन तदुत्पादात् सुतरामव्याप्यवृत्तित्वम् । धर्मादयस्तु व्याप्यवृत्तयः । अत एव शरीरविगमेऽपि तेषामवस्थानम् । अन्यथा स्वर्गनरकजन्मान्तराद्यनुत्पादप्रसङ्गात् । जातमात्रस्य शिशोः स्तन्यपानप्रवृत्यनुकूलेष्टसाधनताज्ञानाद्यनुत्पत्तिप्रसङ्गाच्च । तत्र बुद्धयादयः द्विक्षणमात्रावस्थायिनः, चतुर्थादिक्षणेषु तेषामननुभवात् । धर्मादयश्च चिरस्थायिनः कालान्तरे फलदर्शनात् ॥

## ईश्वरनिरूपणम्

ईश्वरोऽप्येको नित्यो विभुः अशरीरश्च । सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धीच्छाप्रयत्नाष्टगुणवान् । तत्र सङ्ख्यादयः पञ्च पूर्ववत् । बुध्यादयस्तु नित्याः । व्याप्यवृत्तयश्च । धर्मिग्राहकप्रमाणेन तेषामेकत्वेन तथैव सिद्धेः । ईश्वरबुध्यादयः कार्यसामान्यकारणानि ॥

ननु ईश्वरसद्भावे मानाभावः । कार्यवैचित्र्याणां कर्मवैचित्र्यादेवोपपत्तेः । भूपर्वतसागरपाषणाङ्कुराद्युत्पत्तीनामपि प्राण्यदृष्टविशेषादेवोपपन्नत्वात् मयूरादिविचित्रकर्तृत्वमपि अदृष्टद्वारा तस्यैवोपपन्नम् । न च प्रथमं

1 A adds विभुः ।

2 A reads नियमात् ।

मयूरादेर्भाविविचित्रज्ञानाभावेन तत्कर्तृत्वमनुपपन्नमिति वाच्यम् । भाविघटादि-ज्ञानाभावेन कुलालादेरपि घटकर्तृत्वासम्भवात् । तज्जातीयज्ञानमस्तीति यदि, तर्हि प्रकृतेऽपि तुल्यम् । किं च नान्तरीयकतण्डुलमध्यवर्त्तिसूरणामल-कादि पाके तज्ज्ञानाभावेऽपि तत्कर्तृत्वदर्शनात् तज्ज्ञानाभावेऽपि तत्कर्तृत्वं नानुपपन्नम् ॥

तत्र मत्तो भूतं न तु मया कृतमित्यनुभवात्, तत्पाकस्य तज्जन्यत्वेऽपि न तस्य कर्तृत्वमिति चेत् ॥

मैवम् । मादृशानामेतत्कर्तृत्वाभावेऽपि अदृष्टद्वारा भूभूधरवीरुत्सा-गराङ्कुरमयूरादीनामपि असदादिजन्यत्वसम्भवात, ईश्वरस्य गगनकुसुमाय-मानत्वात् । न च कार्यं सकर्तृकमिति नियमात् भूरुहादौ मादृशानां कर्तृत्वासंभवात् ईश्वरः कर्ता सिध्यतीति वाच्यम् । कार्यं शरीरिकर्तृकं इत्यपि नियमस्य घटादाववधारणात् ईश्वरस्यापि शरीरसिद्धिप्रसङ्गात् । नचेष्टापत्तिः । अपसिद्धान्तात् ईश्वरत्वभङ्गप्रसङ्गाच्च । तस्य परिच्छिन्नत्वे युगपन्नानादेशोत्पन्नाङ्कुरादिषु कर्तृत्वानुपपत्तेः । न च तस्य सर्वज्ञत्वात् सर्वशक्तित्वाच्च कायव्यूहस्वीकारेण सर्वमुपपन्नमिति वाच्यम् । कायव्यूहे मानाभावात् । न च सौभर्यादौ तथा श्रवणात् पुराणं प्रमाणमिति वाच्यम् । तथाविधगाथायां श्रद्धामात्रेण तथात्वाभिमानात् । अन्यथा भूमिका-धारकल्पनाभामानामपि तथात्वापातात् ॥

किञ्च चेतनाधिष्ठितशरीरस्य मलमूत्रभ्रमप्रमादविप्रलिप्साकरणापाट-वदोषचतुष्टयकामक्रोधमोहमदमात्सर्यारिषड्वर्गसंबन्धनियमात् । अत एव त्वयापि रामकृष्णादिशरीरे सर्वं स्वीक्रियते । एवञ्च शरीरस्वीकारे ईश्वरस्य सर्वदोषप्रसक्तौ ईश्वरत्वं भज्येत । केनापि कुत्रापि अदृष्टनिर्दुष्टदिव्याविकारि-शरीरस्य शशशृङ्गायमानत्वात् । दृष्टानुसारत्वात् कल्पनायाः । अन्यथा अप्रामाणिकानन्तपदार्थकल्पनाप्रसङ्गात् । अपि च तस्य शरीरं सावयवं

निरवयवं वा? नान्त्यः, तस्य शरीरत्वभङ्गप्रसङ्गात् भोगायतनत्वचेष्टाश्रयत्वयोरभावात्। अन्यथा ईश्वरस्यापि नित्यसुखदुःखादिविकारप्रसङ्गात्। सर्वत्रकार्योपलम्भेन विभुत्वस्वीकारेण चेष्टानुपपत्तेः। नाद्यः, विनाशित्वप्रसङ्गात्। तस्मात्तस्य शरीरित्वकल्पनमप्यसत्कल्पनमिति चेत्। अत्राहुः। घटादिरूपकार्यस्य साक्षात्कृतिजन्यत्वावधारणात्, भूरुहादेरपि कार्यत्वात् तस्यापि साक्षात् कृतिजन्यत्वकल्पनात्, दृष्टानुसारित्वात् कल्पनायाः। यद्विशेषयोः कार्यकारणभावः बाधकं विना तत्सामान्ययोरपीति न्यायात्। इत्थञ्च अस्मदादि कृतीनां तत्र कारणत्वासम्भवात् अस्मदादिकृतिभिन्ना कृतिस्सिद्धा। सा च गुणत्वात् गुणिनमन्तरेणानुपपद्यमाना स्वाश्रयं गुणिनमनुमापयति। तस्याश्च नास्मदादिराश्रयः। अनुपलम्भात्। विनिगमनाभावात् बाधकानुपपत्तितादवस्थ्याच्च तदाश्रयः अस्मदादिभिन्नस्सिद्ध एव ईश्वरः। एवं घटेच्छाशून्येन घटाद्यजननात् अन्वयव्यतिरेकाभ्यां इच्छाया अपि तत्र कारणत्वावधारणात् उक्तन्यायेन अस्मदादीच्छातिरिक्तेच्छाया भूरुहादिकारणत्वेन सिद्धौ तदाश्रयोऽस्मदादिभिन्न उक्तन्यायेन स एव, लाघवात्॥

एवं कपालादिप्रत्यक्षाभावे घटाद्यनुत्पत्तेः उपादानप्रत्यक्षमपि तत्र कारणम्। तथा च अस्मदादीनामङ्कुराद्युपादानप्रत्यक्षासम्भवात् उक्तयुक्त्या अस्मदादिप्रत्यक्षभिन्नं अङ्कुराद्युपादानगोचरप्रत्यक्षं तदाश्रयोऽप्युक्तयुक्त्या स एव, लाघवात्। कृतिरिच्छा ज्ञानञ्च नित्यं, प्रत्येकमेकं लाघवात्। न च शरीरकल्पनम्। कृत्यादिकं विना शरीरस्य जनकत्वासंभवात् कृत्यादिकमेव सर्वत्र कारणम्। न तु शरीरमपि, गौरवात्। तथा च तस्य क्वचित् साक्षात्कारणत्वबाधेन शरीरद्वारा कल्प्यते। ईश्वरस्य तु शक्तत्वात् सर्वविषयकत्वाच्च स्वत एव जनकत्वसंभवेन जगदीश्वरस्य शरीरकल्पनमप्रामाणिकमेव॥

दीधितिकृतस्तु सहस्रतन्तुकपटे एकतन्तुविगमेन नष्टे एकोनसहस्रतन्तुकपटस्यानुभूयमानत्वेन तस्य सहस्रतन्तुकपटभिन्नत्वेन तत्र कुविन्दस्य कर्तृत्वासंभवात् ईश्वर एव कर्ता सिध्यतीति प्राहुः। 'ब्राह्मणोऽस्य मुखमासीत्' (पु. सू.) इत्यादिश्रवणं तु स्वेच्छाकल्पितशरीराभिप्रायेण न तु

वास्तवं शरीरमस्ति । 'अपाणिपाद' (श्वे-३-१२) इत्यादिश्रवणात् । एवञ्च ईश्वरस्य शरीरकल्पनं लोककल्पनं चासत्कल्पनमिति सर्वमवदातम् ॥

द्विधा चात्मा जीवस्सकलजगतामीश इतरः
द्विसप्त द्योतन्ते प्रथम इह सङ्ख्यादिकगुणः ।
महेशे भासन्ते कृतिमतिमुखाश्शोभनतमाः
गुणाह्यष्टौ ज्ञेया विमलमतिभिर्युक्तिभिरमी ॥

मनश्च प्राणिसमसङ्ख्यं अनन्तम् । तच्च सङ्ख्यापरिमाणपृथक्त्वसंयोगविभाग-परत्वाऽपरत्ववेगाष्टगुणवत् । सर्वं पूर्ववत् । तच्च सुखाद्युपलब्धिसाधनम् । तदप्यणुपरिमाणम् । तच्च विभ्विति मीमांसकाः ॥

ननु मनस्सद्भावे मानाभावः । न च सुखाद्युपलब्धयः करणसाध्याः क्रियात्वात् छिदिक्रियावत्, इत्यनुमानेन सुखाद्युपलब्धिकारणसिद्धौ चक्षु-रादीनाञ्च तत्कारणत्वासंभवात्, तत्कारणमन्तः करणं सिध्यतीति वाच्यम् । आवश्यकादृष्टविशेषस्यैव तत्कारणत्वाभ्युपगमात् इति चेन्न । अदृष्टविशेषेण इतरस्यान्यथासिद्ध्यङ्गीकारे इन्द्रियान्तराणामपि विलयप्रसङ्गात् कल्पनामात्रो-च्छेदप्रसङ्गाच्चेति मणिकृतः । व्यासङ्गानुपपत्तिर्मनसो लिङ्गमिति सूत्रम् । तस्यायं निगर्वः । व्यासङ्गदशायां चक्षुरादिसंयोगादौ सत्यपि ज्ञानानुत्पादस्य सर्वानुभवसिद्धत्वात् । इत्थञ्च तद्दशापन्नचक्षुः उपधायकत्वघटककिञ्चिद्द्रव्य संयोगशून्यम् । तदितरचाक्षुषसकलकारणे सत्यपि तदानीं चाक्षुषाजनकत्वात्, चक्षुरसंयुक्तघटादिवत् । एवञ्च तद्विघटकाभावप्रतियोगि यद्द्रव्यं तदेव मनः । न चादृष्टविशेषवैकल्याद्व्यासङ्गोपपत्तिः । अदृष्टविशेषस्य तदानीमपि विद्यमान-त्वात् । व्यासङ्गस्य अन्यथा अनिर्वचनाच्च । निरवच्छिन्नमनस्संयोग-शून्येन्द्रियत्वस्य व्यासङ्गपदार्थत्वात् ॥

एतेन विभु मन इति मीमांसकमतमपास्तम् । तस्य संयोगस्य सर्वदा सत्वेन व्यासङ्गानुपपत्तेः । विभुद्वयसंयोगाभावेन सुखाद्यनुपलब्धि-

प्रसङ्गात् । प्रत्यासत्तेरिन्द्रियस्य कारणत्वात् । अजसंयोगाभावात् । न च दीर्घशष्कुलीं भक्षयतः पुंसः सर्वेन्द्रियजन्यज्ञानयौगपद्यस्य सर्वानुभवसिद्धस्य अपलापप्रसङ्गादिति[ङ्ग इति] वाच्यम् । तत्र यौगपद्यस्य भ्रमविषयत्वात् । बाधकस्य च निवेदितत्वात् ॥

यत्तु मध्यमपरिमाणवत् संकोचविकासशालि मनः । तेन व्यासङ्गयौगपद्ययोरप्युपपत्तेरिति वदन्ति[1] । तत्तुच्छम् । एकस्यैवानन्तान्तःकरणतदुत्पत्तिविनाशतत्कार्यकारणभावतत्प्रतियोगिकानुयोगिकभेदकल्पने गौरवात् । इत्थञ्च सर्वोपलब्धिसाधनं मन इति स्फुटमिति सर्वमवदातम् ॥

सङ्ख्यादयो गुणा अष्टौ भासन्ते मनसि स्फुटम् ।
एवं नवैव द्रव्याणि प्रपञ्चे भान्ति नित्यशः ॥

रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नवेगाः प्रत्यक्षाः । गुरुत्वधर्माधर्मस्थितस्थापकभावना अतीन्द्रियाः । सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वाऽपरत्वद्रवत्वानि चक्षुःस्पर्शनद्वीन्द्रियग्राह्याणि । स्नेहश्च त्वगिन्द्रियमात्रग्राह्यः । शब्दः श्रोत्रेन्द्रियमात्रग्राह्यः । बुध्यादयः षट् मनोमात्रवेद्याः । आत्मैकत्वपरिमाणयोः मनसा ग्रहणात् सङ्ख्यापरिमाणयोः मनोमात्रग्राह्यत्वमिति केचित् । अन्ये तु परिमाणाऽविषयकद्रव्यविषयकप्रत्यक्षाभावादात्मविषयकप्रत्यक्षान्यथानुपपत्त्या परिमाणस्य मानसत्वेपि सङ्ख्याया मानसत्वे मानाभाव इति वदन्ति । वेगश्चक्षुस्त्वगिन्द्रियवेद्यः । इत्थञ्च तेषु प्रमाणं प्रत्यक्षमेव । चित्ररूपसद्भावे चित्रः पटः चित्रं रूपमित्यादिप्रत्यक्षमेव प्रमाणम् ॥

अत्र दीधितिकृतः । चित्ररूपे मानाभावः । अव्याप्यवृत्तिसमानाधिकरणनानारूपविषयत्वेनैव तादृशप्रत्यक्षोपपत्तेः । अत एव प्रान्ते रक्तो मध्ये धवळः पटः इत्यादिव्यवहारोऽपि सङ्गच्छते । अत एव

1 वेदान्तिनः ।

लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ।
श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥

इत्यादिस्मरणमपि सङ्गच्छते । अत एव पञ्चवर्णः पारावतः त्रिश्वेता सल्लकीत्यादिव्यवहारावपि संगच्छेते । अत एव,

भद्रा शैलेषु तुङ्गा प्रभुलकुचयुगे नेत्रयुग्मे च कृष्णा
शोणा बिम्बाधरेऽस्मिन् शुभवचसि सा नर्मदा तापनीया ।
विश्लेषे चन्द्रभागा महितगळतले गोमती सर्वगात्रे
गाम्भीरा नाभिदेशे सरिदखिलतनुर्भाति गोदाकटाक्षे ॥

इत्यादिसाहित्यप्रयोगा अपि सङ्गच्छन्ते । नं च सविषया [1]वृत्ति व्याप्यवृत्ति[वृत्ति] जातेरव्याप्यवृत्तिवृत्तित्वाभावनियमात् व्याप्यवृत्ति रूपम् । अन्यथा निरुक्तव्याप्तिविरोधेन रूपत्वस्य जातित्वाभावप्रसङ्गादिति वाच्यम् ॥

अप्रयोजकत्वात् । अन्यथा सविषयावृत्तीति विशेषणं परित्यज्य व्याप्यवृत्तिवृत्तिजातेरव्याप्यवृत्तिवृत्तित्वाभावनियमस्वीकारे ज्ञानत्वादेरपि तथाभाव-प्रसङ्गादित्याहुः ॥

तच्चिन्त्यम् । एकत्रैव पटे अनन्तरूपतत्प्रागभावतद्ध्वंसतत्कार्यकारण भावतत्प्रतियोगिकानुयोगिकभेदतावदधिकरणवृत्तित्वानाञ्च कल्पनापेक्षया तत्र एकस्यैव चित्ररूपस्य कल्पनायाः लघुत्वांदुचितत्वात् । किं च चित्रः पटः चित्रं रूपमित्यादिव्यवहारादीनां समानाधिकरणनानारूपविषयकत्वोपपत्तौ एकस्मिन्नेव सुवर्णदुर्वर्णादौ क्रमेण बहूनां रूपाणां जायमानत्वेन तत्रापि चित्रप्रत्यक्षव्यवहार इति [त्यति] प्रसङ्गात् ॥

1 ज्ञानत्वादौ व्यभिचारपरिहाराय—सविषयावृत्तीति । संयोगत्वादौ तद्वार-णाय—व्याप्यवृत्तिवृत्तीति ।

न च समानाधिकरण[समानकालीन]नानारूपविषयत्वं तस्येति नोक्तदोष इति वाच्यम् । बहूनां रूपाणामपि चित्रप्रत्ययव्यवहारविषयत्वस्य नियामकत्वस्य च कल्पनापेक्षया एकस्यैव चित्ररूपस्य तद्विषयत्वस्य-तन्नियामकत्वस्य च कल्पनायाः लघुत्वात् । नचोदाहृतस्मरणविरोधः । तस्य वर्णाभिन्नलौहित्यवान् मुखपुच्छावच्छिन्नपाण्डरवान् खुरविषाणावच्छिन्नश्वेत-रूपवान् यः सः नीलो वृष इत्यर्थात् । एतेन त्रिश्वेता सलकीत्यादिकं व्याख्यातम् ॥

गन्धो रसश्च न चित्रः । न चाव्याप्यवृत्तिः । मानाभावात् । ननु रसोऽव्याप्यवृत्तिः । "मूले तिक्ता अन्तराम्ला अधो मधुरा कर्कटकी षड्रसा हरीतकी"

ताम्बूलं कटुतिक्तमुष्णमधुरं क्षारं कषायान्वितं
वातघ्नं कृमिनाशनं कफहरं कायाग्निसन्दीपनम् ।
स्त्रीसंभाषणभूषणं सुरुचिरं शोकस्य विच्छेदनं
ताम्बुले विहितास्त्रयोदश गुणाः स्वर्गेऽपि ते दुर्लभाः ॥

इत्यादयोऽपि सङ्गच्छत इति चेन्न । गौरवस्य निवेदितत्वात् । न च षड्रसा हरीतकीत्यनुपपत्तिः । षड्रसावयवका हरीतकीत्यर्थात् । तत्[illegible]-देश्च अवयवरसविषयकत्वात् । अन्त्यावयवी नीरस एव ॥

नन्वेवं चित्रपटादिरपि नीरूपः स्यात्; द्रव्यचाक्षुषस्य रूपविषयकत्व-नियमोऽपि अवयवरूपविषयकत्वेनैवोपपन्नः, द्रव्यचाक्षुषं प्रति उद्भूतरूपं कारण-मिति कार्यकारणभावोऽपि अवयवरूपेणैव निर्व्यूह्य इति चेन्न । सम्बन्ध-भेदेन कार्यकारणभावस्य भिन्नत्वात् । चित्रस्थले तु रूपस्य स्वसमवायिसम-वेतत्वसम्बन्धेन कारणत्वम् । अन्यत्र च समवायसम्बन्धेन तथात्वमिति नानाकार्यकारणभावप्रसङ्गात् । कारणताघटकसम्बन्धे गौरवाच्च । गन्धरस-योस्तु द्रव्यप्रत्यक्षाऽनुपयोगित्वेन अनुपपत्त्यभावात् । एवं द्रव्यस्पार्शनप्रत्यक्षे

स्पर्शस्याऽपि कारणत्वात् उक्तयुक्त्या स्पर्शोऽपि चित्रोऽङ्गीक्रियते । न च अवयविरसे अवयवरसस्य कारणत्वादवयवानाञ्च रसवत्वाद्धरीतक्यादौ कथं न रसस्योत्पत्तिः । सामग्रीसत्वे कार्योत्पादस्य ब्रह्मणाऽपि निवारयितुमशक्यत्वादिति वाच्यम् । एकजातीयरसं प्रति विजातीयरसस्य प्रतिबन्धकत्वात् । इत्थञ्च हरीतक्यादिषु परस्परविरोधेन न कस्याऽपि रसस्योत्पत्तिः । अत एव विचित्रपटे नीलपीताद्यनुत्पत्या नीलपातादि[वि]लक्षणमेव चित्ररूपमुत्पद्यत इति स्वीक्रियते । अत एव सुकुमारासुकुमारस्पर्शद्वयवदवयवारब्धे अवयविनि चित्रस्पर्शश्च स्वीक्रियते । अधिकं चास्मत्कृतलीलावतीरहस्ये अनुसन्धेयमिति संक्षेपः ॥

एतेन गुरुत्वकार्यस्य पतनादेरपि प्रत्यक्षसिद्धरसेनैवोपपत्तौ गुरुत्वे मानाभाव इति प्रत्याख्यातम् । नीरसस्याऽपि निवेदितत्वेन तत्पतनाभावप्रसङ्गात् । एवं च द्रवत्वकार्यस्य स्यन्दनादेरपि स्नेहेनैवोपपत्तौ द्रवत्वगुणे मानाभाव इत्यपि न, स्नेहकार्यसंग्रहस्याऽपि द्रवत्वेनैवोपपत्तौ स्नेह एव मानाभाव इत्यपि तुल्यत्वात् । तस्माद्विनिगमनाविरहादुभयोरपि सिद्धिः । किञ्च स्नेहस्य जलासाधारणगुणत्वेन तेजः पृथिवीव्यावृत्तत्वात् सुवर्णदुर्वणलाक्षाजतुप्रभृतिषु स्यन्दनाभावप्रसङ्गात् ॥

वस्तुतस्तु स्नेहत्वस्य त्वगिन्द्रियमात्रवेद्यत्वात् द्रवत्वस्य च चक्षुषापि वेद्यत्वात् एकेनान्यस्यापि सिध्यसम्भवात् ॥

## अथ शब्दनिरूपणम्

शब्दश्च ध्वन्यात्मको वर्णात्मकश्च । ध्वन्यात्मकोऽपि द्विविधः । वर्णसंबन्धस्तद्विरुद्धश्च । आद्यः वीणादिध्वनिः । भेर्यादिध्वनिः वर्णविरुद्धः । अत्र द्वितीयादिशब्दजशब्दोत्पत्तिश्च वीचीतरङ्गन्यायेन कदम्बमुकुळन्यायेन वा व्यवस्थितः । वर्णात्मकशब्दानां च ताल्वोष्ठपुटव्यापारजन्यत्वनियमः । अत एव वीणादौ वर्णविशेषसम्बन्धध्वनिजातीयध्वनिविशेषेण वर्णा अनुमीयन्ते । अत एव यत्र रागे बहूनि पदानि तत्र वीणादौ किं पदमिदानीं गीयमानं तेष्विति सन्देहोऽप्यनुभवसिद्ध उपपद्यते ॥

अत्र भट्टाचार्याः । शब्दो द्रव्यं स्वातन्त्र्येण प्रतीयमानत्वात् घटवत् । न च गन्धादौ व्यभिचारः । आश्रयाघटितसन्निकर्षेण प्रतीयमानत्वादिति हेत्वर्थात्[1] । न च सावयवत्वमुपाधिः । द्व्यणुके साध्याव्यापकत्वात् । उभयमतेऽपि गगनादौ साध्याव्यापकत्वात् । न च शब्दो न द्रव्यं श्रोत्रग्राह्यत्वात् शब्दत्वादिवदिति प्रतिरोधः । आश्रयस्य निस्स्पर्शत्वादेरुपाधित्वात् । नचाप्रयोजकता । निरुपाधिकसाहचर्यस्यैवानुकूलतर्कत्वात् अन्यथा निरुपाधिकसाहचर्यमात्रप्रवृत्तानामभेदानुमानतद्रूपतद्द्रव्यत्वपृथिवीत्वाद्यनुमानानामपि लोपप्रसङ्गात् । किञ्च किं महान् कोलाहलः । 'एकः शब्दः' 'पृथक्शब्दाः' इत्यादि प्रतीत्याऽगुणत्वात् द्रव्यत्वं शब्दस्य निर्विघ्नमित्याहुः ॥

तच्चिन्त्यम् । सावयवत्वनिरवयवत्वविकल्पग्रासात् । सावयवत्वे अनन्तावयवतदुत्पत्तिध्वंसतत्कार्यकारणभावतदत्यन्ताभावतत्प्रतियोगिकतदनुयोगिकभेदादिकल्पनं महद्गौरवम् । निरवयवत्वे च अणुत्वेऽप्रत्यक्षत्वप्रसङ्गात् । विभुत्वे च सर्वत्र शब्दोपलब्धिप्रसङ्गात् । श्रोत्रस्यापि गगनस्य विभुत्वेन विभुद्वयसंयोगाभावात् सन्निकर्षाभावेनाप्रत्यक्षत्वप्रसङ्गात् इति ॥

स च शब्दः द्विक्षणमात्रावस्थायी स्वाधिकरणक्षणोत्तरक्षणोत्पन्नशब्दस्यैव नाशकत्वात् । अन्त्यशब्दस्तु उपान्त्यशब्दनाशनाश्यः । अन्यथा नित्यत्वप्रसङ्गात् । उपान्त्यशब्दस्य नाशकत्वे च अन्त्यशब्दस्य क्षणिकत्वप्रसङ्गात्; क्षणिकपदार्थानङ्गीकारात् । उपान्त्यशब्द एव वा अन्त्यशब्दनाशक इति टीकाकृतः । तन्मते तु अन्त्यशब्दः क्षणिक एव ॥

अत्र मीमांसकाः । शब्दस्तावन्नित्यः श्रोत्रग्राह्यत्वात् शब्दत्ववत् । अत एव 'सोऽयं गकार' इति प्रत्यभिज्ञाऽपि सङ्गच्छते । सर्वदा शब्दप्रत्यक्षाभावस्य वायुसंयोगविशेषरूपव्यञ्जकाभावादेवोपपत्तेः । 'इदानीं हट्टे कोलाहल उत्पन्नः' 'विनष्टः कोलाहल' इत्यादिप्रत्यक्षादिस्तु व्यञ्जकवायु-

1 गन्धस्य च संयुक्तसमवायः सन्निकर्षः आश्रयघटितः ।

संयोगोत्पत्तिविनाशविषयः । ताल्वोष्ठपुटव्यापारभेरीताडनतन्त्र्यभिघातादिरपि तद्व्यञ्जकवायुसंयोगोत्पादक एव । भेरीशब्दः घनशब्दः पशुशब्दः नरशब्दः इति विचित्रव्यवहारादिरपि व्यञ्जकविलक्षणवायुसंयोगनिबन्धनः । तेषां शब्दवृत्तित्वेन भानन्तु भ्रमः । एवं चैत्रीयत्वादिकमपि बोध्यम् । तेनैव वाद्यविशेषाद्यनुमानमपि बोध्यम् । न च वायुसंयोगस्य अतीन्द्रियत्वात कथं तेषामन्यथासिद्धिरिति वाच्यम् । वायुगगनसंयोगस्यातीन्द्रियत्वेऽपि वायुकर्णशष्कुलीसंयोगस्य मम प्रत्यक्षत्वात् । मन्मते वायोः प्रत्यक्षत्वात् । तत्संयोगस्यैव विलक्षणत्वादिति प्राहुः ॥

अत्रेदं चिन्त्यम् । सर्वैश्च स्वरसतः प्रतीयमानानामपि उत्पत्तिविनाशानां व्यञ्जकोत्पत्तिविनाशनिबन्धनत्वे घटपटाद्युत्पत्तिविनाशानामपि तथात्वापत्तौ सर्वेषामपि नित्यत्वापत्त्या सत्कार्यवादापातात् । शब्दवृत्तित्वेनैवोत्पत्तिविनाशचैत्रीयत्वमैत्रीयत्वादीनां सर्वदा सर्वैःस्वरसत एव प्रतीयमानत्वेन तावन्तीनां प्रतीतीनां भ्रान्तित्वकल्पनायोगात् । स एवाऽयं गकार इति प्रत्यभिज्ञायाश्च सैवेयं दीपकलिकेतिवत् तज्जातीयत्वावगाहित्वेनाप्युपपत्तेः । अत एव शब्दविशेषेण वस्तुविशेषपुरुषविशेषानुमानमपि सयुक्तिकम्, कार्यस्य कारणानुमापकत्वमिति न्यायात् । अन्यथा अप्रयोजकत्वेन व्याप्त्यभावेन सर्वानुभवसिद्धानुमानभङ्गप्रसङ्गात् ॥

किञ्च शब्दप्रत्यक्षत्वापेक्षया शब्दत्वस्यैव लघुत्वात् तस्यैव वायुसंयोगजन्यतावच्छेदकत्वौचित्यात् । अपि च श्रुतौ "ऋचस्सामानि जज्ञिरे" (तै. आ ३-२६) इत्यादिना, प्रातिशाख्ये च 'अथ शब्दोत्पत्तिः' इत्यादिना, शब्दशास्त्रे "तुल्यास्यप्रयत्नंसवर्णम्" (१-१-९) इत्यादिना शब्दोत्पत्तेः प्रदर्शितत्वात् ॥

अनुमानञ्च, शब्दस्तावदनित्यः बहिरिन्द्रियग्राह्यगुणत्वात्, घटरूपादिवत् । निर्दुष्टपरमेश्वरप्रणीतत्वेनैव वेदस्य प्रामाण्योपपत्तौ न तत्प्रामाण्यसिद्ध्यर्थं शब्दनित्यतासिद्धिरिति सर्वं समीचीनम् ॥

बुद्धिश्च द्विविधा सविकल्पकनिर्विकल्पकभेदात् । सविकल्पकञ्च त्रिविधम् । विशिष्टसमूहालम्बनसमुच्चयभेदात् । तत्र समूहालम्बनं "इमे रसालतालतमालपनसा" इत्यनेकविशेष्यकज्ञानम् । समुच्चयज्ञानञ्च 'वृक्षः संयोगी तदभाववांश्चे'त्येकविशेष्यक प्रतियोगितदभावोभयगोचरम् । विशिष्टज्ञानञ्च द्विविधम् । विशिष्टज्ञानं विशिष्टवैशिष्ट्यज्ञानं चेति । तत्र विशिष्टज्ञानं घटघटत्वतत्सम्बन्धगोचरम् ॥

विशिष्टवैशिष्ट्यज्ञानं चतुर्विधम् । एकं नीलो घटः जातिमान् घटः इत्यादिकं विशेष्ये विशेषणम् तत्र च विशेषणान्तरमित्यादिरीत्या विषयताशालिज्ञानम् । तत्र विशेष्यं घटः । तत्र च विशेषणं नीलरूपं जातिश्च । तत्र नीलत्वस्य जातित्वस्य च विशेषणत्वात् । अन्यदेकञ्च रक्तदण्डवांश्चैत्र इत्यादिकं विशिष्टस्य वशिष्ट्यावगाहि ज्ञानम् । रक्तरूपविशिष्टस्य दण्डस्य पुरुषे वैशिष्ट्यावगाहित्वात् । तत्राऽपि विशेष्ये विशेषणम् तत्र च विशेषणान्तरमिति विषयताप्यस्त्येव । तादृशविशिष्टविषयतायाः विशिष्टस्य वैशिष्ट्यावगाहिविषयताव्यापकत्वात् ॥

परन्तु विशिष्टस्य वैशिष्ट्यावगाहिविषयतातु विशेष्ये विशेषणमिति विषयताशालिज्ञानमात्रे नास्ति क्वचिदपि सामग्र्यभावात् । विशेष्ये विशेषणमिति ज्ञानस्य विशषणज्ञानादिघटितविशिष्टज्ञानसामान्यसामग्रीमात्रजन्यत्वात् । विशिष्टस्य वैशिष्ट्यावगाहिज्ञाने त्वधिकस्य विशेषणतावच्छेदकप्रकारकस्य निश्चयस्य कारणत्वात् । तदुक्तं अनुमितिलक्षणे शिरोमणि भट्टाचार्यैः—दण्डो रक्तो नवेति संशये रक्तदण्डवानिति ज्ञानाऽनुदयात् इति । क्वचिद्विशिष्टवैशिष्ट्यबोधे च घटो नास्तीत्यादौ विशेषणतावच्छेदक प्रकारकसंशयनिश्चयसाधारणज्ञानत्वेनैव कारणत्वम् । अत एव अभावलौकिक प्रत्यक्षे प्रतियोगितावच्छेदकप्रकारकज्ञानत्वेन जनकत्वमपीति प्राचीनैरप्युक्तम् । उभयथाऽपि सामग्रीभेदोऽस्त्येव । अधिकञ्च प्रमाणग्रन्थे वक्ष्यामः ॥

अपरमेक छत्री कुण्डली वासस्वी देवदत्त इत्यादिकं एकत्र द्वयमिति न्यायेन विषयताशालिज्ञानम् । तत्रैव देवदत्ते छत्रकुण्डलवाससां युगपद्विशेषणत्वात् । तदपि विशेषणज्ञानादिघटितविशिष्टज्ञानसामग्रीमात्रजन्यम् ॥

इतरदेकं च एकविशेषणविशिष्टे विशेषणान्तरवैशिष्ट्यावगाहि खड्गी चैत्रः शूर इत्यादिकम् । तत्र खड्गविशिष्टे चैत्रे शौर्यवैशिष्ट्यभानात् । तत्र च विशेष्यतावच्छेदकप्रकारनिश्चयः कारणम् । विशेष्ये खड्गनिश्चयाभावे शौर्यज्ञानाभावस्य सर्वानुभवसिद्धत्वात् । तद्विषयताव्यापिका एकत्र द्वयमिति विषयता तत्सामग्र्या अप्यत्राप्रत्यूहत्वात् । परन्तु एकत्र द्वयमिति विषयताशालिज्ञानसामान्ये विशिष्टे वैशिष्ट्यमिति विषयता नास्ति तत्सामग्र्या असार्वत्रिकत्वात् ॥

इदमत्रावधेयम् । यादृशविशेषणविशिष्टे विशेषणान्तरवैशिष्ट्यं भासते तादृशविशेषणसमानकालीनत्वं विशेषणान्तरे भासते खड्गकालावच्छेदेनैव शौर्यस्याप्यनुभवात् । अत एव [1]वाजपेयाधिकरणे (१-४-६) स्वाराज्यकामो वाजपेयेन यजेतेत्यादौ गुणविधित्वे स्वराज्यसाधनत्वविशिष्टे यागे वाजपेयगुणसाध्यत्वान्वये स्वाराज्यसाधनत्वसमानकालीनत्वस्यापि वाजपेयसाध्यत्वेज्ञानात् एककालावच्छेदेन एकत्र साध्यत्वसाधनत्वयोर्विरोधेन न गुणविधित्वम् । किन्तु कर्मनामधेयत्वं वाजपेयस्येति मीमांसकैरपि सिद्धान्तितम् । एतत्तत्त्वं चास्मत्कृतजैमिनिसिद्धान्तसारे निपुणतरं विवेचितम्; तत्रैवानुसन्धेयम् ॥

1 प्रथमचतुर्थपादे स्थितम्—वाजपेयेन स्वाराज्यकामो यजेत इत्यत्र वाजपेयशब्दः गुणविधायकः उतकर्मनामेति सन्देहे आख्यातार्थे गुणफलयोः तन्त्रेण सम्बन्धसम्भवात मत्वर्थलक्षणाविरहात गुणविधिरिति पूर्वपक्षः । भावनायाः कर्मकरणान्यतरापेक्षत्वात् सम्बन्धमात्रान्वयायोगात् । उभयान्वये च यागस्यफलान्वयार्थं उपादेयत्वविधेयत्वगुणत्वानि गुणान्वयार्थं च उद्देश्यत्वानुवाद्यत्वप्रधानत्वानीति विरुद्धत्रिकद्वयापत्तेः मत्वर्थलक्षणाभिया कर्मनामत्वमिति सिद्धान्तः ।

कथमेवं विषयतावैलक्षण्यं स्वीक्रियत इति नेन्न । अनुभवं पृच्छ । तदुक्तम् लिङ्गकारणतावादे शिरोमणिभट्टाचार्यैः । अनुभवसिद्धो ह्ययं विशिष्टवैशिष्ट्यबुद्धीनां विषयताविशेष इति ॥

विशिष्टवैशिष्ट्यबोधेऽपि विशेणज्ञानादिघटितविशिष्टज्ञानसामग्र्यतिरिक्त-सामग्री न कल्प्यते । विशिष्टवैशिष्ट्यज्ञानस्यार्थसमाजग्रस्तत्वादिति[1] मणिकृतः । तत्र च विचित्रसामग्र्यभावे विचित्रकार्यं कथमिति चिन्त्यम् । [एक] जातिस्थलेऽपि सामग्रीवैचित्र्यं स्फुटमेव । पाकजरूपरसादावपि तत्तत्प्राग-भावानां तद्भेदकादृष्टानां च वैचित्र्यात् सामग्रीवैचित्र्यं स्फुटतरम् ॥

निर्विकल्पकञ्च वैशिष्ट्यानवगाहि ज्ञानम् । तच्चातीन्द्रियम् । तत्र प्रमाणञ्च कार्यकारणभावविवेचनावसरे वक्ष्यामः । तच्च ज्ञानं स्मृतिरनु-भूतिश्चेति द्विविधम् ॥

अनुभूतिश्चतुर्विधा । प्रत्यक्षानुमित्युपमितिशाब्दभेदात् । प्रत्यक्षमपि षड्विधम् । चाक्षुषरासनस्पार्शनश्रावणमानसघ्राणजभेदात् । प्रत्यक्षं चसंशय-निश्चयरूपेण द्विविधम् । आहार्यानाहार्यभेदेन द्विविधम् ॥

तच्च ज्ञानं द्विविधम् । भ्रमप्रमाभेदात् प्रत्यक्षं च द्विविधम् नित्य-मनित्यं च । अनित्यं च निरुक्तं षड्विधम् । नित्यमीश्वरप्रत्यक्षम् ॥

अत्र प्राभाकराः । संशयभ्रमयोर्मानाभावः । सर्वेषां ज्ञानानां यथार्थत्वात् इति । प्रमाणग्रन्थे विवेचयिष्यामः । ज्ञानं च परोक्षाऽपरोक्ष-भेदेनापि द्विविधमिति सर्वं चतुरस्रम् ॥

1 अर्थः सामग्री, समाजः तत्समुदायः तद्ग्रस्तः तत्प्रयोज्यः ।

सुखं दुःखं च प्रत्यक्षमेव । न च सुखाभाव एव दुःखमिति वाच्यम् ; दुःखाभाव एव सुखमित्यपि सुवचत्वात् । विनिगमकाभावादुभयोरपि सिद्धिः । तदुभयमप्यनित्यमेव । केचित्तु ईश्वरस्य नित्यसुखं श्रुतिबलात् स्वीकुर्वन्ति । श्रुतिश्च सत्यं ज्ञानमनन्तं ब्रह्म[विज्ञानमानन्दं ब्रह्म]इत्यादिः ॥

अथ इच्छानिरूपणम्

इच्छाऽपि नित्यानित्यभेदेन द्विरूपा । ईश्वरेच्छा नित्या । तदन्या सर्वाऽनित्या । सा च सर्वा प्रत्यक्षा । द्वेषस्तु सर्वोऽप्यनित्यः । शत्रुं द्वेष्मीति प्रत्यक्षसिद्धिः ॥

प्रयत्नोऽपि नित्याऽनित्यभेदेन द्विविधः । ईश्वरप्रयत्नो नित्यः । तद्भिन्नोऽनित्यः । अनित्योऽपि द्विरूपः । प्रवृत्तिनिवृत्तिभेदात् । न च प्रवृत्त्यभाव एव निवृत्तिरिति वाच्यम् । निवृत्त्यभाव एव प्रवृत्तिरित्यपि सुवचत्वात् । प्रवृत्तिनिवृत्तिभिन्नः रागद्वेषाजन्यः अदृष्टविशेषजन्यः जीवनयोनियत्नः कश्चनापरः यस्मात् सुषुप्तावपि श्वासोद्गमः ; यद्व्यतिरेकाच्च मूर्च्छादौ श्वासाभावः । सचातीन्द्रियः । तदन्यस्सर्वोऽपि प्रत्यक्ष एव ॥

ननु जीवनयोनियत्ने मानाभावः । सुषुप्तादौ श्वासादेरावश्यकादृष्टविशेषादेवोपपत्तेः । तद्धेतोरेवेति न्यायादिति चेत् ॥

अत्राहुः । भारं वहतो धावतोऽवहननादिकं कुर्वतः प्रयत्नोत्कर्षेण श्वासोत्कर्षदर्शनात् । कारणोत्कर्षव्यतिरेकेण कार्योत्कर्षाभावात् श्वासविशेषे प्रयत्नविशेषस्य कारणत्वे सिद्धे [1]यद्विशेषयोरिति न्यायेन श्वासत्वावाच्छिन्नं प्रति प्रयत्नस्य कारणत्वावधारणात् सुषुप्तादौ रागद्वेषाद्यभावेन यत्नान्तराभावात्

1 यद्विशेषयोः कार्यकारणभावः असति बाधके तत्सामान्ययोरपि कार्यकारणभाव इति न्यायः ।

श्वासस्य चानुभूयमानत्वात्तज्जनकजीवनयोनियत्नसिद्धिः । किञ्च समाधिस्थस्य रागद्वेषाद्यभावेऽपि श्वासदर्शनात्तत्कारणत्वेनाऽपि जीवनयोनियत्नसिद्धिः ॥

एते बुद्ध्यादयः षट् द्विक्षणमात्रावस्थायिनः । चतुर्थादिक्षणे तेषामननुभवात् योग्यविभुविशेषगुणत्वावच्छिन्नं प्रति स्वाधिकरणक्षणोत्तरोत्पन्नगुणत्वेनैव नाशकत्वं कल्प्यते । अत एव शब्दस्याऽपि द्विक्षणमात्रावस्थायित्वमिति सर्वं समञ्जसम् ॥

धर्माऽधर्मौ अतीन्द्रियौ अनित्यौ । स्नानदानहोमयागहिंसापैशुन्यादिजन्यत्वात् बहुविधौ । फलभोगप्रायश्चित्तकर्मनाशाजलस्पर्शनकीर्तनादिनाश्यौ ॥

संस्कारश्च त्रिविधः । वेगो भावना स्थितस्थापकश्चेति । तत्र वेगो मूर्तद्रव्यमात्रवृत्तिः । स्थितस्थापकश्च स्पर्शवद्द्रव्यविशेषवृत्तिः ; अन्यथाकृतस्य धनुश्शाखादेः पुनः तादवस्थ्यापादकः । तत्र प्रमाणमपि तादृशकार्यमेव । वेगेनैव तस्याप्युपपत्तौ स्थितस्थापके मानाभाव इत्यपि केचित् ॥

भावनाख्यसंस्कारोऽप्यतीन्द्रियः । स्मृतिजनकः । स च निश्चयजन्यः । निर्विकल्पकसंशयाभ्यां संस्कारस्मरणानुत्पादात् । अत एव स्मरणरूपो न संशयः । न वा निर्विकल्पकं तत् । न चैवं " अस्तु वा पदादपि निर्विकल्पक "मिति मणिवचनविरोध इति वाच्यम् । तुष्यतु दुर्जन इति न्यायात् । स च संस्कारो रोगस्मरणनाश्यः । देहात्मादिभ्रमजनकस्य वासनाख्यसंस्कारस्य च तद्विरोधिज्ञाननाश्यत्वस्य श्रुत्यादिसिद्धत्वात् अन्यत्रापि संस्कारे तद्विरोधिज्ञाननाश्यत्वं कल्प्यते । कालरोगयोस्संस्कारनाशकत्वमध्ययनादौ स्फुटमेव । स्मरणस्य तथात्वञ्च कार्यकारणभावविचारावसरे वक्ष्यामः ॥

ननु धर्माऽधर्मभावनासु मानाभावः [1]ध्वंसद्वारैव यागादिभ्यः कालान्तरभाविफलसम्भवादिति चेन्न । प्रतियोगिध्वंसयोरेकत्राजनकत्वात् । तथात्वे

1 A adds ध्वंसादिभ्यः काला ।

प्रत्युत यागादेः कारणीभूताभावप्रतियोगित्वेन प्रतिबन्धकत्वप्रसङ्गात् । एतदभिप्रायेणैव

"चिरध्वस्तं फलायालं न कर्मातिशयं विने"त्युक्तम्[1] ॥

केचित्तु सत्कर्मणो देवताप्रीतिद्वारम्, असत्कर्मणो देवताया अप्रीतिद्वारमिति न धर्माधर्मसिद्धिरित्याहुः । तदतिस्थवीयः । देवताप्रीतेः कृतिव्यधिकरणत्वेन कृतिजन्यत्वासम्भवात् । फलव्यधिकरणत्वेन फलजनकत्वासंभवाच्च । प्रीतेस्सर्वथैवानुद्देश्यत्वात् । तेन पितृस्वर्गादिकमुद्दिश्य क्रियमाणवृषोत्सर्गकन्यादानाश्वमेधगयाश्राद्धादिकर्मभ्यः पितरि फलजननेऽपि न विरोधः । तत्र तस्योद्देश्यत्वात् ॥

अन्ये तु यागादेरेव तावत्कालस्थायित्वं कल्प्यते । तत्समयविशेषरूपकारणाभावादेव चतुर्थादिक्षणे यागादेरप्रत्यक्षत्वोपपत्तिरित्याहुः । तदपि न ज्यायः । यागादेस्सङ्कल्पादिरूपत्वेन यथाकथञ्चित् तस्य स्थायित्वसमर्थनेऽपि एककालावच्छेदेन बहिःप्रदेशावच्छिन्नसर्वाङ्गीणगङ्गाजलसंयोगरूपस्य गङ्गाजलनाशेन नाशात् । फलस्य कालान्तरभावित्वात् । उक्तयुक्त्या ध्वंसस्य व्यापारत्वासम्भवात् अपूर्वसिद्धेः, अन्यत्रापि तथात्वौचित्यात् । न च हविर्वह्निसंयोगादेर्यथा न यागत्वं अपि तु सङ्कल्पविशेषस्यैव, तथा सङ्कल्पविशेषस्यैव स्नानत्वमिति वाच्यम्

'गङ्गायां मौसलस्नानं महापातकनाशनम्'

इति सङ्कल्पशून्यस्यापि तस्य स्नानत्वस्मरणात्, फलजनकत्वस्मरणाच्च ॥

इतरे तु पूर्ववर्त्तिन एव कारणत्वं न त्वव्यवहितपूर्ववर्तिनः गौरवात् । इत्थञ्चाशुविनाशिनः निर्व्यापारस्यापि यागादेः कारणत्वमविरुद्धमिति वदन्ति ।

1 न्या. कु. परि ।

तदतितुच्छम् । भग्नदण्डस्य कुलालादेःघटाद्यर्थिनः दण्डान्तरे प्रवृत्तिर्न स्यात् । एवं नष्टपत्नीकस्य रागिणः विवाहान्तरे, नष्टौदनस्य बुभुक्षितस्यौदनान्तरे प्रवृत्तिर्न स्यात् ॥

स्यादेतत् । ध्वंस एव व्यापारोऽस्तु प्रतियोगिध्वंसयोरेकत्राजनकत्वादिति मन्त्रपाठस्याप्रयोजकत्वात् । अन्यथा प्रागभावध्वंसयोरेकत्राजनकत्वादिति नियमेन मणिप्रागभावध्वंसयोरपि दाहकजनकत्वं न स्यात् । न च प्रतिबन्धकत्वप्रसङ्गः । संसर्गाभावत्वेन कारणीभूताऽभावप्रतियोगिन एव प्रतिबन्धकत्वात् । अन्यथा घटाभावादिप्रत्यक्षकारणीभूताऽभावप्रतियोगित्वेन घटादेरपि घटाभावादिप्रत्यक्षप्रतिबन्धकत्वप्रसङ्गात् । चाक्षुषकारणीभूतालोकरूपाभावप्रतियोगिनोऽन्धकारस्य चाक्षुषप्रतिबन्धकत्वापाताच्च । न च ध्वंसस्यानन्तत्वात् स्वर्गधारापत्तिः । चरमस्वर्गाधिकरणध्वंसस्य प्रतिबन्धकत्वात् पुण्यपापशब्दानां च सदसत्कर्मवचनत्वादिति चेत् ॥

अत्रोच्यते । अस्ति तावदिदम् ।

"कर्मनाशाजलस्पर्शात् करतोयातिलङ्घनात् ।
गण्डकीबाहुतरणात् धर्मः क्षरति कीर्तनात् ॥"

इत्यादिस्मरणम् । तत्रत्यधर्मशब्दो न कर्मपरः तस्य पूर्वमेव नष्टत्वेन कालान्तरीयकीर्तनादेस्तन्नाशजनकत्वासम्भवात् ध्वंसस्य च नाशाभावात् नित्यत्वात् । नापि कीर्तनादेः प्रतिबन्धकत्वम् । तस्याप्याशुविनाशित्वेन तन्नाशानन्तरं फलोत्पादप्रसङ्गात् । नापि कीर्तनादिध्वंसप्रतिबन्धकता, कीर्तनकाले फलोत्पत्तिप्रसङ्गात । कीर्तनानन्तरकृतयागादीनामपि फलाभावप्रसङ्गाच्च । न च यागान्तरमुत्तेजकमिति वाच्यम् । यागध्वंसानन्तरमपि विशिष्टाभावसंपत्त्यर्थं तद्ध्वंसस्यापि उत्तेजकत्वं वाच्यम् । तथा च पुनः कीर्तनादेर्विफलभावप्रसङ्गात् । न च तत्कर्मजन्यफलं प्रति तत्कीर्तनादित्वेन प्रतिबन्धकत्वमिति वाच्यम् । कीर्तनादिस्थलीयकर्मजन्यफलासिध्या तादृश-

प्रतिबन्ध्यप्रतिबन्धकभावस्य कल्पयितुमशक्यत्वात् । तस्मात्कीर्तनादिनाश्यः धर्मपदवाच्यः कश्चन यागादिजन्योऽङ्गीकर्तव्यः ॥

अत्र मीमांसकाः, दर्शपूर्णमासस्थले आग्नेयादिषड्यागकर्तुरेव फलम् । न त्वेकादिविकलस्य इति सर्वसिद्धम् । तत्र च फलं प्रति षण्णां ध्वंसानां कारणत्वकल्पनापेक्षया लाघवादेकमेवापूर्वं तत्कारणं सिध्यति । तदपूर्वं प्रति षडपूर्वस्य कारणत्वकल्पने गौरवादेकद्वयजन्यापूर्वसिद्धिः । अत एव दर्शपूर्णमासाभ्यामिति द्विवचनमपि साधु सङ्गच्छते । साङ्गाद्वैदिककर्मणः फलावश्यम्भावित्वात् एकाङ्गविकलेऽपि फलाभावात् अनन्तकोटिध्वंसानां फल-हेतुत्वकल्पनापेक्षया लाघवेन एकमेवापूर्वं फलजनकत्वेन सिध्यतीति प्राहुः ॥

प्राभाकरास्तु 'ज्योतिष्टोमेन स्वर्गकामो यजेते'त्यादौ स्वर्गरूपेष्ट-साधनत्वं विधिना बोध्यते, तच्च न साक्षादिति परंपरया तद्वाच्यम् । तदपि परंपरासाधनत्वं परंपराघटकोपस्थितिं विना न सम्भवति । परम्परा-घटकश्च उक्तयुक्त्या न ध्वंसादिरिति अपूर्वद्वारा स्वर्गसाधनत्वं वेदेन बोध्यते । तथा च विधिनैवापूर्वसिद्धिरिति वदन्ति ॥

'प्रायश्चित्तादिनाश्यत्वेनाधर्मसिद्धिः'

इति विशिष्टबुद्धिं प्रति विशेषणविषयकत्वेन कारणत्वात् स्मृतेरपि विशिष्ट-बुद्धित्वात्, तत्र च पूर्वानुभवस्य परंपरया अन्यत्र च साक्षात्कारणत्वेन नानाकार्यकारणभावापत्त्या विशेषणविषयकत्वेन कारणत्वात् संस्कारसिद्धिः । तस्य सविषयकत्वमपि धर्मिग्राहकमानसिद्धमिति सम्प्रदायः ॥

दीधितिकृतस्तु निरुक्तकार्यकारणभावे मानाभावात् विशिष्टानुभवं विशिष्टप्रत्यक्षं प्रत्येव विशेषणज्ञानत्वेन कारणत्वात् न तथा भावनासिद्धिरिति प्राहुः । बुद्धीच्छाद्वेषप्रयत्नभावनाख्यसंस्कारास्सविषयाः । तदतिरिक्तास्सर्वे पदार्थानिर्विषया एव ॥

अत्र केचित् ज्ञानमेकं सविषयकं, इच्छादीनां सविषयकत्वं शब्दस्येव भाक्तम् । न च विनिगमनाविरहः । प्राथम्यादिच्छादिषु कारणत्वाच्च ज्ञानस्यैव सविषयत्वौचित्यादित्याहुः। तन्न ज्यायः । ' घटं जानामी 'तिवत् ' घटं करोमि ' ' घटमिच्छामि ' ' घटं द्वेष्मी 'ति सविषयत्वानुभवस्य सर्वत्राविशेषात्। ज्ञाने घटसम्बन्धवत् इच्छादौ [1]घटादिसम्बन्धस्यापि विषयतातिरिक्तस्यासम्भवात। न च स्वजनकज्ञानविषयत्वमेव सम्बन्ध इति वाच्यम् । गौरवात् । स्वजन्येच्छाविषयत्वमेव ज्ञानघटयोस्सम्बन्ध इति ज्ञानस्यैव निर्विषयत्वप्रसङ्गाच्च । ज्ञानानुपस्थितावपि इच्छाद्युपस्थितेरानुभाविकत्वेन प्रथमोपस्थितिनियमाभावात। कदाचित् प्रथमोपस्थितेश्चाविशेषात् । घटमिच्छति घटं करोति घटं द्वेष्टीत्यादौ सविषयत्वाभावे घटादीनां कर्मत्वं न स्यात्; धात्वर्थतावच्छेदकफलशालित्वाभावात; परसमवेतक्रियाजन्यफलशालित्वाभावाच्चेति । सविषयकत्वे तु घटं जानातीत्यादौ घटादेरिव विषयत्वेनैव कर्मत्वोपपत्तिः ॥

इच्छाकृत्योश्च विषयत्वं त्रिविधम् । उपादानत्वसाध्यत्वोद्देश्यत्वभेदात् । तन्त्वादेश्च उपादानत्वेन विषयत्वम् । पटादेश्च साध्यत्वेन विषयत्वम् । परिधानादेश्चोद्देश्यत्वेन विषयत्वम् । अत एव कर्मकरणेतिकर्तव्यतादीनां भावनाविषयत्वं स्वीकृतं भट्टाचार्यैः ॥

उक्तञ्च-' सर्वोऽप्ययं भावनाया एव प्रपञ्च ' इति । अत एव इच्छास्वाभाव्यादसिद्धोपरागेण सिद्धविषयिणी इच्छेति तत्र तत्रोक्तं सङ्गच्छते । अत एव इच्छाकृत्योः फलज्ञानं उपादानप्रत्यक्षं च कारण(त्व)मित्यपि सङ्गतम् । अन्यथा तेषां भिन्नविषयकत्वेन कारणत्वासम्भवादिति सर्वं भद्रम् ॥

तत्र रूपं द्रवत्वञ्च पृथिव्यादित्रयवृत्ति । रसो गुरुत्वञ्च पृथिवीजलवृत्ति । गन्धः पृथिवीमात्रवृत्तिः । स्नेहः जलमात्रवृत्तिः । बुद्ध्यादयो

1 A reads घटादीच्छा ।

भावनान्ता आत्ममात्रवृत्तयः । स्थितस्थापकः स्पर्शवद्विशेषवृत्तिः । तत्र रूपरस-गन्धस्पर्शसांसिद्धिकद्रवत्वस्नेहशब्दबुद्ध्यादिभावनान्ता विशेषगुणाः । तदन्ये सामान्यगुणा इति सर्वमवदातम् ॥

चतुर्विंशतिसङ्ख्याका गुणा राद्धान्तरीतितः ।
प्रोक्तास्तेषाञ्च नामानि कथितान्याश्रयक्रमात् ॥

## कर्मनिरूपणम्

कर्म च निरुक्तम् । तत्र प्रमाणं प्रत्यक्षमेव । तस्य चक्षुस्त्वगिन्द्रिय-वेद्यत्वात् । तच्चोत्सर्गतश्चतुःक्षणावस्थायि । तस्य स्वजन्यसंयोगनाश्यत्वात् । क्रिया, क्रियातो विभागः, विभागात् पूर्वदेशसंयोगनाशः, पूर्वदेश संयोगनाशादुत्तरदेशसंयोगः, तेन च क्रियानाश इति तस्य चतुः-क्षणावस्थायित्वम् । स्वाश्रयनाशकसामग्रीसमव(धा)धानकालोत्पन्नक्रियायास्तु तृतीयादिक्षणे नाशात् कस्याश्चित्क्रियाया द्विक्षणावस्थायित्वम् । आरम्भ-कसंयोगप्रतिद्वन्द्विविभागजनकक्रियायाश्च पञ्चक्षणावस्थायित्वम्, आरम्भक-संयोगप्रतिद्वन्द्विविभागजनकक्रियाया अनारम्भकसंयोगप्रतिद्वन्द्विविभागजनक-त्वाभावात् । अन्यथा विकसत्कमलमुकुळादौ कमलभङ्गप्रसङ्गात् । तथा चारम्भकसंयोगप्रतिद्वन्द्विविभागजनकक्रियया तथाविधविभागः । तत आरम्भ-कसंयोगनाशकाले अनारम्भकसंयोगप्रतिद्वन्द्वी विभागः । ततो द्रव्यनाशकाले अनारम्भकसंयोगनाशः । तत उत्तरदेशसंयोगः । तेन क्रियानाश इति पञ्चक्षणावस्थायित्वम् । आरम्भकसंयोगनाशमपेक्ष्यानारम्भकसंयोगप्रतिद्वन्द्वि-विभागजनकत्वमते षट्क्षणावस्थायित्वम् । द्रव्यनाशमपेक्ष्य तथाविधविभाग-जनकत्वमते सप्तक्षणावस्थायित्वम् । एतेन शब्दबुद्धिकर्मणां त्रिक्षणावस्थायि-त्वमिति भ्रान्तानां मोहो हेयः । शब्दबुद्ध्यादीनां द्विक्षणावस्थायित्वस्य निवेदितत्वात् । कर्मणां चतुःक्षणावस्थायित्वं विज्ञापितमेव । कर्मविशेषस्य बुद्धिविशेषस्य च तथात्वेऽपि शब्दस्य त्रिक्षणावस्थायित्वमसम्भावितमेवेति सर्वं समञ्जसम् ॥

सामान्येऽपि प्रत्यक्षमेव मानम् । तस्य षडिन्द्रियवेद्यत्वात् ।

अत्र चार्वाकादयः, सामान्ये मानाभावः । चित्रेषु घटादिषु अयं घटोऽयं घट इति प्रतीतिव्यवहारयोरपि अघटव्यावृत्तिरूपाभावादेवोपपत्तेरिति वदन्ति । तन्न । अघटव्यावृत्तिरित्यत्राघटत्वं घटभिन्नत्वं, तच्च न घटप्रतियोगिकभेदवत्वम् । एकघटप्रतियोगिकभेदस्य घटान्तरे सत्वेन तद्व्यावृत्तेस्तत्राभावात्तत्र घटव्यवहारो न स्यात् । किन्तु घटसामान्यावच्छिन्नप्रतियोगिताकभिन्नत्वं घटभिन्नत्वं वाच्यम् । तत्र च घटसामान्यं यदि निरुक्तं व्यावृत्तिरूपं तदा अन्योन्याश्रयादिः । तस्माद्भावरूपं सर्वघटानुगतसामान्यमवश्यमङ्गीकार्यम् । एवं पटादिसामान्यमपीति जलाहरणयोग्यत्वपरिधानयोग्यत्वादीनाञ्च घटपटादिव्यवहारनियामकत्वे भस्त्रिकाकम्बलादावपि घटपटव्यवहारप्रसङ्गात् । योग्यतावच्छेदकं विना योग्यत्वस्याप्यननुगतत्वाच्च । सामान्यं नित्यम् । तर्हि प्रळयादौ घटादिजन्यद्रव्याभावात् घटत्वादिजातीनां क्व वृत्तिरिति चेत् श्रुतमस्माभिः[1] काल एव । तच्च सामान्यमनित्यमिति वेदान्तिनः ॥

## विशेषनिरूपणम्

शब्दाश्रयत्वातिरिक्तस्याकाशत्वस्याभावात्, शब्दसमवायिकारणतावच्छेदकत्वेन विशेषसिद्धिः । न च गगनैकत्वमेव तथेति वाच्यम् । गगनपरिमाणमादाय विनिगमनाविरहात् । विशेषस्य धर्मिग्राहकमानेन तदवच्छेदकत्वेनैव सिद्धत्वात् न ताभ्यां विनिगमनाविरहः ॥

## समवायनिरूपणम्

समवाये प्रमाणञ्च प्रत्यक्षमेव । इह तन्तुषु पटसमवाय इत्यनुभवात् । प्राभाकरवैशेषिकौ च अतीन्द्रियो नित्य इति वदतः ॥

1 A reads श्रूयतां युष्माभिः ।

अत्र भट्टाचार्याः, समवाये मानाभावः । निरुक्तप्रत्यक्षस्य स्ववासनामात्रकल्पितत्वात् । कस्तर्हि अवयविगुणक्रियासामान्यादीनामवयवादिभिः सम्बन्ध इति चेत्? श्रूयतां सावधानतः । अस्ति हि भूतले घटो नास्तीति प्रतीत्या भूतलाभावयोः कश्चन सम्बन्धः । स च न संयोगः । न समवायः । तयोर्भावमात्रसम्बन्धत्वात् स्वरूपस्य सम्बन्धत्वे अतिप्रसङ्गात् अननुगमाच्च । वैशिष्ट्यनामके कस्मिंश्चित् सम्बन्धे कल्प्यमाने लाघवेनावयव्यादिसाधारण एव सम्बन्धः कल्प्यते । अन्यथा सम्बन्धान्तरकल्पने गौरवादित्याहुः ॥

अत्र ब्रूमः । एतत्कपालनाशादेतत्कपालसम्बद्धद्रव्यगुणकर्मणां नाशस्य सर्वसिद्धत्वात्, तत्र च तत्तन्नाशं प्रति तत्तन्नाशस्य कारणत्वकल्पने नानाकार्यकारणभावप्रसङ्गात्, एतत्कपालविशिष्टनाशं प्रति एतत्कपालनाशत्वेन कारणत्वे कल्प्यमाने एतत्कपालवृत्तिध्वंसस्याऽपि नाशापत्त्या अभावव्यावृत्तं वैशिष्ट्यं वाच्यम् । स एव समवायः । न चैवमपि एतत्कपालसमवेतनाशं प्रत्येतत्कपालनाशत्वेन कारणत्वकल्पनेऽपि एतत्कपालसमवेतसामान्यस्याऽपि नाशापत्त्या नाशत्वावच्छिन्नं प्रति जन्यभावत्वेन कारणत्वमिति कार्यकारणभावस्यावश्यकत्वेन समवायाभावेऽपि न ध्वंसध्वंसापत्तिरिति वाच्यम् । नाशत्वावच्छिन्नं प्रति जन्यत्वेनैव कारणत्वकल्पनात् । न तु भावत्वं निविशते गौरवात् । एतच्चास्मत्कृतलीलावतीरहस्ये अनुसन्धेयम् ॥

साम्प्रदायिकास्तु, नित्यमेकमनेकानुगतं सामान्यमिति हि सामान्यलक्षणम् । तत्रानेकगतत्वं न सम्बन्धसामान्येनानेकवृत्तित्वम् अभावस्याऽपि सामान्यत्वप्रसङ्गात् । किन्त्वनेकसमवेतत्वं तदिति वाच्यम् । तथा च समवायसिद्धिः । अत एव सामान्यं द्विविधम् । जातिरुपाधिश्चेति मतमपास्तम् । उपाधेस्समवायाभावेन सामान्यत्वभङ्गप्रसङ्गात् । तस्य नित्यत्वाभावाच्च, तस्य नित्यत्वस्वीकारे कम्बुग्रीवादिमत्वादिनैव सर्वोपपत्तौ जातिविलोपप्रसङ्गात् । नचेष्टापत्तिः । द्वैविध्याभावेन तवैव व्याघातात् । नाममात्रस्य भिन्नत्वात् । अत्र च गगनादावतिव्याप्तिवारणाय—अनुगतेति । संयोग-

द्वित्वादौ तन्निरासाय-नित्यमिति । एकमिति सम्पातायातम् । नित्यमनेकसमवेतं सामान्यमिति सम्यक्त्वादिति प्राहुः ॥

## अभावनिरूपणम्

अत्यन्ताभावोऽन्योन्याभावश्च चतुर्विधौ । विशेषाभावस्सामान्याभावो विशिष्टाभावो व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावश्चेति । तत्र विशेषाभावः तत्तद्धटत्वादिविशेषधर्मावच्छिन्नप्रतियोगिताकः । सामान्याभावश्च घटत्वपटत्वादिरूपसामान्यधर्मावच्छिन्नप्रतियोगिताकः । विशिष्टाभावः दण्डविशिष्टपुरुषत्वावच्छिन्नप्रतियोगिताकः । व्यासज्यवृत्तिधर्मावच्छिन्नाभावश्च द्वित्वादिव्यासज्यवृतिधर्मावच्छिन्नप्रतियोगिताकः ॥

ननु किमिदं प्रतियोगित्वम्? । किंवा तदवच्छेदकत्वमिति? । अत्र आचार्याः[1] । प्रतियोगित्वं अभावाभावत्वम् । भवति च घटाभावे घटः प्रतियोगी । घटाभावाभावोऽपि घटः । घटवत्येव घटाभावाप्रतीतेः, व्यवहाराच्च । तयोश्च घटेनैवोपपत्तावतिरिक्ताभावकल्पने गौरवात् अनवस्थाप्रसङ्गात् । तथा च घटाभावाभावत्वस्य घट एव सत्वेन तदेव घटस्य प्रतियोगित्वम् । तदवच्छेदकत्वं च अन्यूनानतिरिक्तवृत्तिधर्मः । इत्थञ्च विशेषाभावप्रतियोगितावच्छेदकं न घटत्वमेव, उक्तयुक्तेः । न च कम्बुग्रीवादिमत्वस्याऽपि तथात्वात् तत्कुतो नावच्छेदकमिति वाच्यम् । तस्य गुरुधर्मत्वात् लघुधर्मस्यैवावच्छेदकत्वात् । तदुक्तं व्याप्तिवादे शिरोमणिभट्टाचार्यैः । 'सम्भवति लघौ गुरौ तदभावादि'ति ॥

विशिष्टाभावप्रतियोगितावच्छेदकः विशिष्टधर्मः उक्तयुक्तेः । चतुर्थस्तु स्फुटः । व्यासज्यवृत्तिधर्मश्च द्वित्वादिः । स चाभावः 'इह घटपटोभयं

1 उदयनाचार्याः—अभावविरहात्मत्व वस्तुनः प्रतियोगिता इति कुसुमाञ्जलौ ।

नास्ती 'ति प्रतीतिसिद्धः । घटपटोभयाभावप्रतियोगितावच्छेदकं घटपटोभयत्वमित्याहुः ॥

अत्र मणिकृतः । अभावाभाववत्वं न प्रतियोगित्वं अभावत्वस्य भावधर्मत्वाभावात्; अन्यथाऽभावत्वस्य केवलान्वयित्वापातात् । नचेष्टापत्तिः । तस्य विभाजकत्वाभावेनाभावस्य पृथक्पदार्थत्वानुपपत्तेः । विभाजकस्यातिरिक्तस्य कस्यचिदभावत्वस्य स्वीकारे निरुक्ताभावत्वे मानाभावात् । किञ्चाभावाभाववत्वं न प्रतियोगित्वम् । पटाभावाभाववत्वस्य घटाभावप्रतियोगित्वप्रसङ्गात् । किन्तु स्वाभावाभाववत्वं स्वस्य प्रतियोगित्वम् । तथा च स्वाभावेत्यत्र षष्ठ्यर्थप्रतियोगित्वप्रवेशेनात्माश्रयात् । परन्तु प्रतियोगित्वं स्वरूपसम्बन्धविशेष इति प्राहुः । एतदेवोक्तं व्याप्तिवादपूर्वपक्षे शिरोमणिभट्टाचार्यैः 'स्वाभावेत्यत्र षष्ठ्यर्थप्रतियोगितायाः प्रवेशात् तत्र स्वरूपसम्बन्धस्यैव शरणीकरणीयतया तस्यावश्यकत्वेन तथात्वौचित्यादिति ॥

केचित्तु विरोधित्वमेव प्रतियोगित्वमिति वदन्ति । तन्न सम्यक् । संयोगात्यन्ताभावप्रागभावध्वंसान्योन्याभावप्रतियोगिन्यव्याप्तेः । गोत्वाश्वत्वयोरपि परस्परविरोधेन परस्परप्रतियोगित्वप्रसङ्गाच्च ॥

दीधितिकृतस्तु अभावाभाववत्वं प्रतियोगित्वम् । घटाभावाभावो हि न घटः उक्तयुक्तेः । किन्तु घटसमनियतोऽतिरिक्तः । अन्यथा भावे अभावत्वप्रकारकप्रतीतेः भ्रमत्वाप्रसङ्गात् । तदभावस्तु घटाभावएव । तत्रोक्तबाधकाभावात् । अतो नानवस्था । नापि स्वरूपसम्बन्धविशेषः प्रतियोगित्वम् । तस्य तत्तत्प्रतियोगिरूपस्याननुगमेनानुगतप्रतियोगिव्यवहारानुपपत्तेः । तस्मात् प्रतियोगित्वमखण्डोपाधिरतिरिक्तः पदार्थ इति प्राहुः ॥

वस्तुतस्तु प्रतियोगितावच्छेदकस्वरूपमेव प्रतियोगित्वम् । अतो नाननुगमः । नचैकस्यैवावच्छेदकत्वमवच्छेद्यत्वं च विरुद्धमिति वाच्यम् ।

प्रकारभेदेन विरोधाभावात् । अस्ति च प्रकृते प्रकारभेदः । घटत्वेनावच्छेद्य- त्वस्य स्वरूपतोऽवच्छेदकत्वस्य च स्वीकारात् । अधिकञ्चाग्रे वक्ष्याम इति सकलं भद्रम् ॥

एवं प्रतियोगितावच्छेदक[त्व]मपि स्वरूपसम्बन्धविशेष इति निगर्वः । एतेन प्रतियोगितावच्छेदकत्वं नान्यूनानतिरिक्तवृत्तिधर्मत्वम् । तद्घटसमवेतरूप- रसादीनामपि विनिगमनाविरहेण विशेष्याभावप्रतियोगितावच्छेदकत्वापातात् । नापि प्रतियोगिनि प्रकारीभूय भासमानधर्मत्वम् । दत्तोत्तरप्रायत्वात् । नापि प्रतियोगिनि कारणीभूतज्ञानप्रकारीभूय भासमानधर्मत्वं । कारणतावच्छे- दकावच्छिन्नस्यैव कारणत्वेन पूर्वदोषानुवृत्तेः । नापि प्रतियोगिफलोपहित- ज्ञाने प्रकारीभूय भासमानधर्मत्वम । एतद्रजतं तत्र नास्तीत्यादौ तद्रजत- प्रत्यक्षस्यैव तत्र फलोपहितत्वेन तद्विषयत्वाच्च तद्रूपपरिमाणद्रव्यत्वसत्वादी- नामपि तदवच्छेदकत्वापातात् । प्रमेयघटो नास्तीत्यादौ प्रमेयत्वस्याप्यवच्छेद- त्वापातात् । कम्बुग्रीवादिमान्नास्ति घ्राणग्राह्यगुणो नास्ति पीतशङ्खो नास्ति लोहितवह्निर्नास्तीत्यादौ कम्बुग्रीवादिमत्वघ्राणग्राह्यगुणत्वपीतत्वविशिष्टशङ्खत्वलौहि- त्यविशिष्टवह्नित्वादीनामवच्छेदकत्वापाताच्च । अत एवान्यूनवृत्तित्वमनति- रिक्तवृत्तित्वं वा तदित्यपि निरस्तम् । अत एव च अभावज्ञाने प्रति- योग्यंशे प्रकारीभूय भासमानधर्मत्वं तदित्यपि परास्तम् ॥

नाप्यवच्छित्तिप्रत्ययजनकत्वम् । तद्धि वस्तुगत्या यदवच्छेद्यं तत्प्रत्य- यजनकत्वं वा ? । इदमनेनावच्छिन्नमिति अवच्छिन्नत्वप्रकारकप्रत्ययजनकत्वं वा ? । नाद्यः । घटत्वादेः प्रतियोगित्वज्ञानजनकत्वे मानाभावात् । ' इदानी- मेतद्देशवृत्त्यभावप्रतियोगिनी मसृणघुसृणारुणातरुणी 'ति नष्टरमणीविषयिणी प्रोषितस्य मतिः । तत्र चारुण्यादेर्नष्टत्वेन जनकत्वाभावादवच्छेदकत्वं न स्यात् । अत एव न द्वितीयः । न च प्रतियोगितावच्छेदकस्यैव प्रतियोगितात्वात्, स्वप्रत्यक्षे च स्वस्य कारणत्वात् अवच्छिन्नप्रत्यक्षजनकत्वं

तदित्युक्तौ नोक्तदोष इति वाच्यम् । अतीन्द्रियेऽवच्छेदके अव्याप्तेः । इत्यादिनिर्वचनाभासा[1] समाधानावसानादरमणीया इति सर्वं शोभनम् ॥

ननु विशेषाभावातिरिक्तसामान्याभावे मानाभावः । नचैवं घटवत्यपि 'घटो नास्ती'ति प्रत्यक्षव्यवहारप्रसङ्गः, विशेषाभावस्य तत्राऽपि सत्वादिति वाच्यम् । विशेषाभावकूटस्यैव तद्विषयत्वाभ्युपगमात् । तस्य च तत्राऽभावादिति चेत् ॥

अत्र मणिकृतः । अस्ति तावद्वायौ 'पृथिवीरूपं नास्ति' 'जलरूपं नास्ति' 'तेजोरूपं नास्ती'ति निश्चये जागरूकेऽपि 'वायौ रूपं न वा' 'वायू रूपवान्न वे'ति सकलानुभवसिद्धः संशयः । स च सामान्याभावाभावेऽनुपपन्नः । तत्र विशेषाभावानां निश्चितत्वात् । निश्चिते च संशयायोगात् । सामान्याभावस्वीकारे च तस्य तत्राऽनिश्चयात् तद्विषयकसंशयः उपपद्यते । न चातिरिक्तसम्भावनाविरहसहकृतस्तथेति वाच्यम् । अतिरिक्तसम्भावना हि अतिरिक्तरूपविषयिणी वा? अतिरिक्ते रसादौ रूपत्वविषयिणी वा? नाद्यः । अप्रसिद्धेः । न द्वितीयः । रसो न रूपं गन्धो न रूपमिति प्रसिद्धभिन्नपदार्थसामान्ये रूपत्वाभावस्य रूपभिन्नत्वस्य च निश्चयेऽपि निरुक्तस्य संशयस्य सर्वानुभवसिद्धत्वादिति प्राहुः ॥

दीधितिकृतस्तु दाहे यावन्मणिसंसर्गाभावस्य कारणत्वकल्पनापेक्षया लाघवात् तत्कारणत्वेन मणित्वावच्छिन्नप्रतियोगिताकसामान्याभावः सिद्धः । नचैवं मणिध्वंसप्रागभावाधिकरणे तदत्यन्ताभावस्य विरोधेन असत्वात्, तदानीमपि दाहानापत्तिरिति वाच्यम् । प्रतियोगिनेव ध्वंसप्रागभावाभ्यामपि विरोधे मानाभावादित्याहुः ॥

नवीनास्तु, जलह्रदादावेव वह्निर्नास्तीति प्रतीतिव्यवहारौ, न तु महानसादाविति सर्वसिद्धम् । तथा[2] चानन्तविशेषाभावानां विषयत्वस्य नियामकत्वस्य

1 A reads मानाभावादनादरणीया ।

2 A reads तथा च ।

च कल्पनमपेक्ष्य एकस्यैवाभावस्य तद्विषयत्वस्य तज्जनकत्वस्य च कल्पनाया लघुत्वादित्यूचुः ॥

केचित्तु तथाऽपि विशिष्टाभावे मानाभावः । दण्डवति दण्डविशिष्ट-पुरुषाभावव्यवहारादेः पुरुषवति तदभावव्यवहारादेश्च पुरुषाभावेन दण्डा-भावेनैव चोपपत्तेरित्याहुः ॥

मणिकृतस्तु कदाचिद्विशेषणाभावस्य कदाचिद्विशेष्याभावस्य च तन्नियामकत्वकल्पने अननुगमात् , विशेषणविशेष्यसम्बन्धाभावो विशिष्टाभावः नत्वतिरिक्तः । किञ्च परस्परासम्बद्धदण्डपुरुषोभयवत्यपि ‘ दण्डी नास्ती ’ति प्रतीतेः, विशेषणविशेष्यसम्बन्धाभावः विशिष्टाभावः, नत्वन्यतराभावः, तस्य तत्राभावादिति वदन्ति ॥

अत्र मिश्रप्रभृतयः दण्डसम्बन्धस्य पुरुषवृत्तित्वेन तदधिकरणे तदभावस्य सत्वात् दण्डिमत्यपि भूतले ‘ दण्डी नास्ती ’ति प्रतीतिप्रसङ्गात् । न च परंपरासम्बन्धेन तदभाववत्येव तत्प्रत्ययादिति वाच्यम् । अन्यधृतदण्ड-संयुक्तपुरुषवति ‘ तद्दण्डी नास्ती ’ति व्यवहारो न स्यात् ; न स्याच्च शिरसि दण्डधरवहनपुरुषवत्यपि देशे ‘ दण्डी नास्ती ’ति प्रतीतिः । तस्मादतिरिक्त-विशिष्टाभावसिद्धिरप्रत्यूहैव । तस्य च धर्मिग्राहकप्रमाणेनानतिप्रसक्तस्यैव सिद्धेः नातिप्रसङ्गशङ्केति प्राहुः ॥

ननु तथाप्युभयाभावे मानाभावः । घटमात्रवति ‘ घटपटौ न स्त ’ इति प्रतीतेः पटाभावविषयत्वेन पटमात्रवति तथा प्रतीतेः घटाभावविषयत्वे-नैवोपपत्तेः, उभयशून्ये च तादृश्याः प्रतीतेः विनिगमनाविरहादुभयविषयत्व-मिति चेत् ॥

मैवम् । तत्रोभयत्वं प्रतियोगितावच्छेदकमिति सर्वानुभवसिद्धम् न हि प्रत्येकाभावप्रतियोगितावच्छेदकमुभयत्वं भवितुमर्हतीति तदवच्छिन्न-प्रतियोगिताकाभावः कश्चनातिरिक्तः स्वीकार्यः । किञ्च घटपटमठदण्डमुण्ड-कुड्यकुमुदकुन्दकुसूला न सन्तीत्यादौ दशानामभावानां विषयत्वस्य नियाम-कत्वस्य च कल्पनमपेक्ष्य तद्विषयत्वेन च लाघवेन एकस्यैव व्यासज्यवृत्ति-धर्मावच्छिन्नप्रतियोगिताकाभावस्य कल्पनाया एवोचितत्वात् ॥

एतेन उभयशून्ये तस्य सिद्धत्वेऽपि एकवत्युभयाभावे मानाभाव इति मतमपास्तम् । उभयत्र प्रतीतिवैलक्षण्यप्रसङ्गात् । उभयत्वादेस्तत्रापि प्रतियोगितावच्छेदकत्वेनानुभूयमानत्वात् क्लृप्तत्वाच्च । न च प्रतियोगि-तावच्छेदकावच्छिन्नप्रतियोगिसत्त्वस्य गुरुतया प्रतियोगिसत्त्वस्य लाघवेनाभाव-विरोधित्वादेकस्याप्युभयाभावप्रतियोगित्वादेकवति कथं तदभावो वर्तत इति वाच्यम् । विरोधित्वं हि तस्य विरोधिज्ञानविषयत्वेन । नेतरथा, माना-भावात् । इत्थञ्च तज्ज्ञानस्य न प्रतियोगिज्ञानत्वेन विरोधित्वम् । प्रमेयत्वादिना तज्ज्ञानस्यापि विरोधित्वप्रसङ्गात् । किन्तु प्रतियोगितावच्छेद-कावच्छिन्नप्रतियोगिज्ञानत्वेन तथात्वं वाच्यम् । एवञ्च प्रतियोगितावच्छेद-कावच्छिन्नप्रतियोगिसत्त्वमेव तदभावविरोधीत्यायातम् ॥

किञ्च प्रतियोगिसत्त्वमात्रं नाभावविरोधि, संयोगसम्बन्धेन घटवति समवायसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यासत्त्वप्रसङ्गात् । नापि तेन प्रति-योगिसत्त्वं तत्सम्बन्धावच्छिन्नाभावविरोधि, समवायसम्बन्धेन द्रव्यवति जलादौ पृथिवीवृत्तित्वविशिष्टद्रव्याभावासत्त्वप्रसङ्गात् । एवं संयोगसम्बन्धेन घटवति पूर्वक्षणविशिष्टतद्घटाभावसत्त्वेन तत्प्रतीतिव्यवहारयोस्सर्वानुभवसिद्धयोरपलाप-प्रसङ्गात् । तस्मात्प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिसत्त्वमभावविरोधीति सिद्धम् । एवमन्योन्याभावोऽपि बोध्यः ॥

केचित्तु घटपटोभयं न पट इति प्रतीतिबलाद्व्यासज्यवृत्तिधर्मावच्छिन्नाधिकरणताकाभावमपि कञ्चन स्वीकुर्वन्ति । सौन्दलोपाध्यायाः[1] पटवत्यपि घटत्वेन पटो नास्तीत्यनुभवात् व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावमपि कञ्चनाभ्युपगच्छन्ति ॥

अत्यन्ताभावस्य व्याप्यवृत्त्यव्याप्यवृत्तिभेदेन द्वैविध्यमपि बोध्यम् । तत्राव्याप्यवृत्तयः संयोगविभागशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाभावाः । तदन्ये व्याप्यवृत्तयः । प्रमाणं च तत्र प्रत्यक्षकार्यादिकमेव । पक्षिसंयोगवत्यपि 'शाखायां वृक्षः पक्षिसंयोगी न मूल' इत्यनुभवात् । अन्योन्याभावस्तु व्याप्यवृत्तिरिति सिद्धान्तः ॥

अत्र लीलावतीकृतः संयोगाभावो नाव्याप्यवृत्तिः संयोगस्य व्याप्यवृत्तित्वात् । प्रतियोगिनो व्याप्यवृत्तित्वे तदभावस्याव्याप्यवृत्तित्वासम्भवात् । स्वाभावसामानाधिकरण्यस्यैवाव्याप्यवृत्तित्वात् । निरुक्तप्रतीतिः मूले पक्षिसंयोगाभावमवगाहते न वृक्ष इति वदन्ति ॥

दीधितिकृतस्तु संयोगेन द्रव्यस्याव्याप्यवृत्तित्वात् तदभावोप्यव्याप्यवृत्तिः । 'इह पर्वते शिखरे हुताशनः न नितम्ब' इति प्रतीतेः । वृत्तेरप्यव्याप्यवृत्तित्वे वृत्तिमतो व्याप्यवृत्तित्वस्यात्यन्तमसम्भावितत्वाच्च । एवं संयोगादिमदन्योन्याभावोऽपि अव्याप्यवृत्तिः । 'मूले वृक्षः पक्षिसंयोगवान्ने'त्यनुभवात् । न च 'शिखी ध्वस्त' इत्यादि प्रतीतेः "सविशेषणे हि विधिनिषेधौ विशेषणमुपसङ्क्रामतः सति विशेष्ये बाधे"इति न्यायेन तत्र पुरुषस्य विद्यमानत्वेन शिखाध्वंसविषयत्ववत् निरुक्तप्रतीतेरपि संयोगाभावविषयत्वमेव कल्प्यत इति वाच्यम् । एवं सति अन्योन्याभावविलोपप्रसङ्गात् । 'घट-

1 B reads कोदण्डोपाध्यायाः ।

भिन्नः पट' इत्यादावपि घटत्वाद्यभावविषयत्वेनैव त्वदुक्तरीत्यैवोपपत्तेः । यदि घटादेरेव प्रतियोगित्वावगाहनादिति तदा तुल्यमिति प्राहुः ॥

नवीनास्तु समवायोऽप्यव्याप्यवृत्तिः । ततश्च तेन सम्बन्धेन द्रव्यस्याव्याप्यवृत्तित्वात्तेनसम्बन्धेन तदभावोऽप्यव्याप्यवृत्तिः । 'इह तन्तुषु पटसमवायो न दशायामिह तन्तुषु पटो न दशाया'मित्यनुभवादित्याहुः ॥

यज्ञपत्युपाध्यायास्तु, धर्मात्यन्ताभावो धर्म्यन्योन्याभावश्च एक एव तयोः समनियतत्वात् अविरोधित्वाल्लघुत्वाच्चेति वदन्ति ॥

दीधितिकृतस्तु, समनियतात्यन्ताभावानां सर्वेषामेवैक्यं वदन्ति । भेदे मानाभावात् । प्रागभावमपि नाभ्युपगच्छन्ति ॥

अत्र प्राभाकराः । अधिकरणातिरिक्ताभावसद्भाव मानाभावः । न च घटवति तदभावप्रत्ययप्रसङ्गः । अधिकरणविशेषस्यैव तथात्वाभ्युपगमात् ॥

ननु कोऽयं विशेषः? न कैवल्यम् । तस्याप्यभावरूपत्वेनात्माश्रयात् । अन्यस्य दुर्वचत्वात् । नापि तदधिकरणव्यक्तिरूपमेव विशेषः । विचित्रेष्वनेकेष्वधिकरणेषु 'घटो न, घटो नास्ती'त्येकाकारव्यवहारानुपपत्तेः । अनुगतधर्माभावे अनुगतव्यवहारानुपपत्तेरिति चेन्न । अभावत्वस्य कस्यचिद्धर्मस्य सर्वत्रानुगतस्य 'धर्मिकल्पनात[2]' इति न्यायेन स्वीकारात् । अभेदेऽप्याधारधेयभावो रूपभेदेन[3] न विरुद्धः । अत एव घटवत्यपि घटापसरणदशायां घटाभावव्यवहारोऽप्युपपद्यते । तदव तत्र तदभावत्वस्य सत्वात् । तस्य च सप्रतियोगिकत्वेन न सप्रतियोगिकत्वानुपपत्तिरिति वर्णयन्ति ॥

1 A reads चित्रेषु अनन्तेषु ।

2 धर्मिकल्पनातः धर्मकल्पनं वरं इति न्यायः ।

3 भूतलत्वेनाधारता घटाभावत्वेन आधेयता ।

अत्रेदं चिन्त्यम् । सप्रतियोगिकः अनुगतश्च यो धर्मः स एवाभावः । न च तत्राभावत्वस्यापि कल्पने गौरवमिति वाच्यम् । तस्यातिरिक्तस्याकल्पनात् तदपि सम्बन्धभेदेन प्रतियोगितावच्छेदकमेवेति अनुपदमेव विवेचयिष्यते । तेन 'भूतले घट' इत्याधाराधेयभावोऽपि सम्मुख एव समीचीनः ॥

तार्किकंमन्यास्तु 'इह भूतले घटो नास्ती'ति प्रतीतिसिद्धाभावत्वस्यानन्ताधिकरणवृत्तित्वकल्पनापेक्षया एकमेवाभावं कल्पयित्वा तत्रैवाभावत्वस्य वृत्तिमत्वकल्पनायां च अभावकल्पना तस्यानेकाधिकरणवृत्तिकल्पना च फलमुखत्वान्न दोषायेत्याहुः ॥

ननु अभावत्वं न भावभिन्नत्वम् । तद्धि भावत्वावच्छिन्नप्रतियोगिताकभिन्नत्वम् । भावत्वञ्च द्रव्याद्यन्यतमत्वम् । तदपि द्रव्यभिन्नत्वे सति गुणभिन्नत्वे सति सामान्यभिन्नत्वे सति विशेषभिन्नत्वे सति समवायभिन्ना यः तद्भिन्नत्वम् । तथा चान्योन्याश्रयः । नापि 'द्रव्यगुणकर्मसामान्यविशेषसमवाया' इति समूहालम्बनधीविषयत्वं भावत्वम् । तदवच्छिन्नप्रतियोगिताकभिन्नत्वमभावत्वम् । तादृशबुद्ध्यज्ञानेपि अभावज्ञानात । भिन्नत्वस्यान्योन्याभावरूपत्वेन अन्योन्याभावत्वाज्ञाने तदज्ञानात् । अन्योन्याभावत्वस्य चाभावघटितत्वेनान्योन्याश्रयात् अभावत्वाघटितान्योन्याभावत्वस्य दुर्वचत्वात् । तस्मादभावत्वं दुर्वचमिति चेन्न ॥

अत्र ब्रूमः । सत्तावच्छिन्नप्रतियोगितानिरूपितमनुयोगित्वमभावत्वम । तदपि प्रतियोग्यनुयोगिभावनिरूपकस्वरूपसम्बन्धविशेषेण सत्वमेव । न च सामान्यादावतिप्रसङ्गः । तस्यापि तद्भिन्नत्वेन तेन सम्बन्धेन सत्वादावपि सत्वस्य सत्वादिति वाच्यम् । यत्र हि समवायसम्बन्धेन सत्वं न तत्र समवायसम्बन्धावच्छिन्नस्वावच्छिन्नप्रतियोग्यनुयोगिभावसम्बन्धेन सत्तेति सर्वं सिद्धम् । एवञ्च सामान्यादावप्येकार्थसमवायसम्बन्धेन सत्वस्य सत्वात् ।

निरुक्तसम्बन्धेन तत्र सत्वस्य व्याप्यवृत्तित्वात्, एकार्थसमवायसम्बन्धेन वृत्तित्वे समवायसम्बन्धेन वृत्तित्वस्याप्रत्यूहत्वात्। अत एव समवायस्यापि स्वस्वरूपस्यैव सम्बन्धत्वात तत्राप्येकार्थसमवायसम्बन्धेन सत्वस्य सत्वात् न समवायेऽप्यतिप्रसङ्गः। न चैवं स्वसमवायिविशेषणतासम्बन्धेनाभावेऽपि सत्वस्य वृत्तित्वेन प्रतियोग्यनुयोगिभावसम्बन्धेन उक्तयुक्त्या सत्वाभावादव्याप्तिरिति वाच्यम्। समवायातिरिक्तसम्बन्धावच्छिन्नस्वावच्छिन्नप्रतियोग्यनुयोगिभावसंबन्धेन तत्रान्यत्र चाभावसामान्य एव सत्ताया विद्यमानत्वात्, समवायातिरिक्तसम्बन्धानवच्छिन्नप्रतियोगितानिरूपितमनुयोगित्वमभावं इति लक्षणं निर्व्यूढम्। एतेन ध्वंसप्रागभावप्रतियोगिनि तयोस्सम्बन्धावच्छिन्नत्वे मानाभावात् तदुभयत्र निरुक्तलक्षणमव्याप्तमिति प्रत्युक्तम्। विशिष्टाभावघटितलक्षणस्य तत्राप्यप्रत्यूहत्वात्। सम्बन्धानवच्छिन्नत्वादेव समवायातिरिक्तसम्बन्धानवच्छिन्नत्वात्॥

वस्तुतस्तु समवायसम्बन्धेन घटवति समवायसम्बन्धावच्छिन्नतद्घटत्वावच्छिन्नप्रतियोगिताकाभावज्ञानानुदयस्येव तदानीं तद्घटप्रागभावध्वंसयोरपि ज्ञानानुदयस्य सर्वानुभवसिद्धत्वात; तथा च प्रतिबध्यप्रतिबन्धकभावत्रयकल्पने गौरवात्। समवायसम्बन्धावच्छिन्नतद्घटत्वावच्छिंन्नप्रतियोगिताकत्वं त्रयाणामपि स्वीकृत्य एकप्रतिबध्यप्रतिबन्धकभावकल्पनाया लाघवेनोचितत्वात् इति॥

अत्यन्ताभावप्रतियोगितायास्सम्बन्धावच्छिन्नत्वे प्रतिबध्यप्रतिबन्धकभावं एव हि मानम्, अन्यथा संयोगेन घटवति समवायेन तदभावप्रत्ययाभावप्रसङ्गात्। एवमन्योन्याभावप्रतियोगिताया अपि बोध्यम्। इत्थञ्च यथा घटत्वादेः प्रतियोगितावच्छेदकत्वं तथा संयोगादिसम्बन्धविशेषस्यापि मन्तव्यम्। इयांस्तु विशेषः। घटत्वादेः प्रकारतया संयोगादेस्तु संसर्गतयेति॥

एतेन प्रतियोगितावच्छेदकभेद एव अभावभेदनियामकः । न प्रतियोगिभेदः । तथा सति एकघटप्रतियोगिकानां चतुर्णामप्यभेदप्रसङ्गात् । तत्र प्रतियोगितावच्छेदकभेदस्तु विद्यत एव । अत्यन्ताभावे तद्घटत्वस्यान्योन्याभावे तादात्म्यस्य प्रागभावे उत्तरकालस्य ध्वंसे पूर्वकालस्यावच्छेदकस्य भेदसत्वादिति प्राचीनमते संयोगेन घटाभावस्य समवायेन घटाभावस्य च भेदो न स्यात् । उभयत्र घटत्वस्यैकस्यैव प्रतियोगित्वावच्छेदकत्वादित्यादि नवीनोक्तदूषणाभासा न भासन्ते । तत्रापि संसर्गविधयावच्छेदकभेदस्य जागरूकत्वात् । यावदवच्छेदकभेदस्य तथात्वे च घटान्योन्याभावात्यन्ताभावयोरपि भेदो न स्यात् गौरवाच्चेति सर्वं शिवम् ॥

एवं तादात्म्यातिरिक्तसंसर्गावच्छिन्नप्रतियोगिताकाभावत्वं संसर्गाभावत्वम् । अन्योन्याभावेऽतिव्याप्तिप्रत्याख्यानायातिरिक्तान्तम् । न च संयोग्यन्योन्याभावेतिव्याप्तिः । तस्य तादात्म्यातिरिक्तसंयोगावच्छिन्नप्रतियोगिताकत्वात् तस्य संसर्गत्वाच्चेति वाच्यम् । संयोगितादात्म्यस्य संयोगरूपत्वेन तद्भिन्नत्वाभावात्[1] तादात्म्यस्याभेदरूपत्वादभेदस्य भेदाभावत्वादन्योन्याभावाभावस्य च प्रतियोगितावच्छेदकरूपत्वात् । तादात्म्यस्य प्रतियोगिमात्रवृत्त्यसाधारणधर्मरूपत्वेपि प्रकृते संयोगस्य तादृशत्वात् ॥

वस्तुतस्तादृशसंसर्गावच्छिन्नत्वं च संसर्गविधया तदवच्छिन्नत्वमिह निवेशितमिति न कोऽपि दोष इति ॥

1 ततश्च तादात्म्यातिरिक्तत्वं संयोगस्य नेति नातिव्याप्तिः ।

एवमन्योन्याभावत्वं तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम् । न च संयोग्यत्यन्ताभावेतिव्याप्तिः । तत्र संयोगस्य सम्बन्धविधयानवच्छेदकत्वात् । प्रतियोग्यवृत्तिसदातनाभावत्वं वा । न च घटपटोभयं न घट इति प्रतीतिसिद्धव्यासज्यवृत्तिधर्मावच्छिन्नाधिकरणताकान्योन्याभावे अव्याप्तिरिति वाच्यम् । तादृशाभावानभ्युपगमात् । तादृशप्रतीतेश्च घटे घटपटोभयत्वावच्छिन्न[1]प्रतियोगिताकभेदविषयत्वात् । तर्हि तत्रैवाव्याप्तिरिति चेन्न, तत्रात्यन्ताभाववत्त्येव लक्षणाकल्पनात्, तादृशप्रत्यक्षस्यापि अत्यन्ताभावविषयत्वात् । सदातनशब्देन प्रागभावध्वंसयोर्व्यवच्छेदः । न च तथापि नित्यत्वात्यन्ताभावेतिव्याप्तिः । तस्यापि नित्यत्वेन तस्य तदवृत्तित्वादिति वाच्यम् । तस्य भावपदार्थत्वेन अभावत्वाभावेन विशेष्येनैव तद्वारणात् । नित्यत्वं हि ध्वंसाप्रतियोगित्वम् । तदभावश्च ध्वंसप्रतियोगित्वमिति । तेन प्रतियोगिवृत्त्यभावत्वमत्यन्ताभावत्वमित्यन्ताभावलक्षणमपि तत्र नाव्याप्तम् । तस्य भावरूपत्वेनालक्ष्यत्वात् ॥

एतेन निर्वक्तुमशक्यत्वात् भेदपदार्थ एवालीक इति नृसिंहाश्रमपरिश्रमः केवलं श्रम एवेत्याश्रयणीय एव । एवं सदातनसंसर्गाभावत्वमत्यन्ताभावत्वं उत्पत्तिमदभावत्वं ध्वंसत्वं विनाश्यभावत्वं प्रागभावत्वमिति लक्षणान्यवसेयानि । न च कृतप्रायश्चित्तस्याविहितकर्मानाचरणविहितकर्माचरणयुक्तस्य दुःखप्रागभावे अव्याप्तिः । तस्य दुःखानुत्पादेन प्रागभावस्य नित्यत्वादिति वाच्यम् । तत्र दुःखासम्भवेन प्रागभावे मानाभावात् । प्रायश्चित्तादेश्च अधर्मनाशकत्वात् ॥

[1] A reads भयावच्छिन्न ।

न च घटवति घटात्यन्ताभावाप्रतीतेः ततो नीते च घटे तत्र घटाभावप्रतीतेः पुनश्च तत्रानीते घटे तदभावाप्रतीतेश्च उत्पत्तिविनाशशालिनं कञ्चनात्यन्ताभावं स्वीकुर्वन्ति वेदान्तिनः । तथा च तत्र प्रागभावलक्षणं ध्वंसलक्षणञ्चानिव्याप्तमिति वाच्यम् । तादृशात्यन्ताभावसद्भावे मानाभावात् । उक्तप्रतीतीनां च समयभेदेन क्लृप्ताभावस्यैव सम्बन्धतदभावाभ्यामेवोपपत्तेः । अन्यथा तथाविधानां तादृशात्यन्ताभावानां तत्सम्बन्धानाञ्च तदुत्पत्तिविनाशानां तत्कार्यकारणभावानां तत्प्रतियोगिकतदनुयोगिकभेदानाञ्च कल्पने बहुतरगौरवप्रसङ्गात् ॥

एवं गन्धानाधारसमयानाधाराभावत्वं प्रागभावत्वं ; पीतानाधारसमयानाधाराभावत्वं, चित्रानाधारसमयानाधाराभावत्वं, तिक्तानाधारसमयानाधाराभावत्वं, ज्ञानेच्छाकृतिभिन्नविभुविशेषगुणानादायापि लक्षणानि तत्र तत्र ज्ञेयानि । एवं स्वकालीनकालिकयावत्परत्वाश्रयावधिकापरत्वसमानकालीनाभावत्वं प्रागभावत्वम् । न च प्रलयरूपध्वंसेऽतिव्याप्तिः । प्रलयसमानकालीनकालिकपरत्वाप्रसिद्धेः । नापि प्रलयप्रागभावेऽव्याप्तिः, तत्समानकालीनः यावत् — परत्वाश्रयावधिकापरत्वाप्रसिद्धेरिति वाच्यम् । तस्यादृष्टरूपत्वाभावत्वेनालक्ष्यत्वात् । अदृष्टविशेषध्वंसस्यैव प्रलयत्वात् । प्रागभावादीनामनादित्वेन स्वसमानाधिकरणकालिकयत्किञ्चित्परत्वाश्रयावधिकापरत्वसमानकालीनत्वात् । सर्वेषां प्रागभावानामसंभवनिवारणाय यावदिति । तथाविधदैशिकपरत्वाश्रयावधिकापरत्वसमानकालीनत्वात् सर्वेषां तेषामसंभवनिरासाय कालिकेति सर्वमवदातमिति संक्षेपः ॥

स्पन्दः समानं सामान्यं विशेषस्समवायकः ।
अभावस्सप्रपञ्चश्च निरणायि निरङ्कुशम् ॥

## उपसंहारः

नत्वा लक्ष्मीनृसिंहं शशिनिभवपुषं देवदेवं त्रिणेत्रम्
कृत्वा नानाविधानां बहुकृतिनिचयं कल्पनानां शुभानाम् ।
दृष्ट्वा कर्णाटगौडद्रमिडमगधजान् मैथिलान् पण्डितार्यान्
सृष्ट्वा श्रीतत्त्वतर्कं भुवि कथककविः काश्यपः श्रीनिवासः ॥

इति श्रीनिवासाचार्यविरचितं
न्यायसिद्धान्ततत्त्वामृतं समाप्तम्




PRINTED AT THE INDIA PRINTING WORKS, MYLAPORE MADRAS.